हा । ई२या । सूपायप्रस्तृ । पा । इहा । इ२या । सूपाय० । इहा । ई२या । अभिप्रियाणिपवतेच२नो
हा१भिता२ः । नामानियव्हो अधिचेपु३वार्हो१ता२यि । आसूर्यस्यबृहतोबृ३हाना१धी२ । रथंविष्वं
चमरुहद्वि३चाक्षा१णा२ः । सूपायप्रस्तृ । पा । इहा । ई२या । सूपाय० । इहा । ई२या । सूपायप्र० ।
इहा । ई२ । या२३४ । औहोवा । ए । सूपायप्रसूपाय । ए । सूपायप्र० । ए । सूपायप्रसूपाया२३११
१ ॥ ६ ॥ ६ ॥ ॥ २६८ ॥ सूपायप्रस्तृ । पा । ओहा । ई२या । सूपाय० । ओहा । ई२या । सू
पायप्र० । ओहा । इ२या । त्वयावयंपवमानेनसोमा । भरेकृतंविचिनुयामशाश्वात् । तन्नोमित्रोवरु
णोमामहांताम् । अदितिःसिंधुःपृथिवीउताद्यौः । सूपायप्रस्तृ । पा । ओहा । ई२या । सूपा० । ओहा ।
ई० । सूपा० । ओहा । इ२ । या२३४ । औहोवा । ए । सुवः । ए । सुवः । ए । सुवा२३१११ः॥
॥ ७ ॥ ७ ॥ ॥ २६९ ॥ सूपायप्रस्तृ । पा । ओहा । सूपायप्रस्तृ । पा । आहा । सूपायप्रस्तृ । पा ।

॥ २६८ ॥ आपाञ्चिष्टुप्सोमोलिंगोक्तावा. ॥ २६८ ॥ सर्पशांतिर्मा.
॥ २६९ ॥ समुद्रञ्चिष्टुप्सोमोलिंगोक्तावा. ॥ २६९ ॥ सर्पशांतिर्मा.

ओहा । त्वयावयंपवमानेनसोमा । भरेकृतंविचिनुयामशाश्वात् । तन्नोमित्रोवरुणोमामहंताम् । अ
दितिःसिंधुःपृथिवीउतद्योः । सूपायप्रस्तु । पा । ओहा । सूपा० । ओहा । सूपा० । ओ२ । हा२३४ ।
ओहोवा । सुवः । ए । सुव. । ए । सुवः । ए२३१११ ॥ ८ ॥ ८ ॥ ॥ २७० ॥ स्वादोरित्थावि
षूवताएहाउ । मधोःपिबंतिगौरियाएहाउ । याइंद्रेणसयावराएहाउ । वृष्णामदंतिशोभथाएहाउ ।
वस्वोरनुस्वराजियामे३हाउ । वा । ए । दिशःप्रदिशःक । पा२ । ता२३४ । ओहोवा । ए । राजंगमेम
स्वराजंगमेमा२३१११ ॥ ९ ॥ ९ ॥ ॥ २७१ ॥ स्वादोरित्थाविषूवताओहाउ । मधोःपिबंतिगौ
रियाओहाउ । याइंद्रेणसयावराओ० । वृष्णामदंतिशोभथाओ० । वस्वोरनुस्वराजियामो३हाउ । वा
। ए । उद्दिशोविद्दिशःक । पा२ । ता२३४ । ओहोवा । ए । विराजंगमेमस्वराजंगमेमा२३१११ ॥ १० ॥
॥ १० ॥ ॥ २७२ ॥ ओहोयि । त्वमिंद्रप्रतूर्त्तिषू६ए । अभायिवायिश्वाः । आसिस्पा२३४र्द्धाः ।

| | |
|---|---|
| ॥ २७० ॥ मद्रु पञ्चिकारद्र | ॥ २७० ॥ सर्पदातिमा |
| ॥ २७१ ॥ मद्रु पञ्चिकारद्र | ॥ २७१ ॥ सर्पदातिमा |
| ॥ २७२ ॥ प्रजापति पथ्यावृहतींद्र | ॥ २७२ ॥ विष्णुसूक्तमां. |

आशास्तिहाजनिताव्ह । त्रतू२३रसायि । तुवा२३तूया । तरोहो३ । हुंमा२ । प्याऽ२तो३५हायि ॥ ११
॥ ११ ॥ ॥ २७३ ॥ हाहुम् । हाहुम् । हाहुम् । योवा । योवा । योवा । योवाहायि । योवा० । यो
वा० । यएकइद्विदयते । एक६ समरयन्नृधे । वसुमन्तायदाशुषे । एक६ समरयन्म हे । ईशानोअप्रतिष्कु
तः । एकोवृषाविराजति । इंद्रोअंग । हाहुम् । हाहुं । हाहुं । योवा । यो० । यो० । योवाहायि । यो० । यो-
वा३ । हाउ । वा३ । ई२३१११ ॥ १४ ॥ १२ ॥ ॥ २७४ ॥ एऊच्चा । तेजातमंधसोदिविसद्भू-
मियार्२ददायि । इडा । उग्र६ शर्ममहा१यिश्रा३वाः । सानः । इंद्राययज्यवेवरुणायमरू२ङ्गियाः । ई-
डा । वरिवोवित्परा१यिस्रा३वा । आयिना । विश्वान्यर्यआद्युम्नानिमानुपा२णाम् । ईडा । सिषा-
संतोवना२३होयि । माहा२१उवा२३ । ईट्ईडा२३१११ ॥ १९ ॥ १३ ॥ ॥ २७५ ॥ अभि

॥ २७३ ॥ प्रजापतिरुष्णिगिंद्रः
॥ २७४ ॥ प्रजापतिर्गायत्रीसोमः
॥ २७५ ॥ वासिष्ठोबृहतीशानेंद्रौ.

॥ २७३ ॥ वृषोत्सर्गनान्यासमा.
॥ २७४ ॥ मूळविधानसमा.
॥ २७५ ॥ भासादिमां. अगन्यासमां. एकादशाहमां. वृषो-
त्सर्गन्यासमां बृहस्पतिशांतिमा. विष्णुसूक्तमां.
तर्पणमां.

स्याशूरनोनुमोवा। आदुग्धायिवधेनवईशानमस्यजगतः। सुवा२३र्द्दशाम्। आयिशानमा२३यिंद्रा
३। तास्थू२३४पा। ओवा६। हाउवा। अस्॥ २१ ॥ १४ ॥ ॥ २७६ ॥ आक्रंदयोवा। कुरु
धीयंमहा२। आन्ता२म्। हरीइंद्रस्याभियोजया२। आशू२। मर्माविधंददतामन्यो२। आन्या२म्। शा
स्यात्मापततुश्लोकमा२३। आ२। छा२३४। औहोवा। अस्॥ २५ ॥ १५ ॥ ॥ २७७ ॥ हो
वा३हा३। आ२यि। हिया२३१११। हाउ। हाउ। हाउ। एहियाहाउ। एहियाहाउ। एहिया३४। औ
होवा। इहप्रजामिहरयिंररराणाहस्। होवा३हा३। आ२यि। हिया२३१११। हाउ। हाउ। हाउ
। एहियाहाउ। एहिया०। एहिया०। कयानश्चायि। त्रआ२भू२३४वात्। होवा३हा३। आ२यि। हि
या२३१११। हाउ। हाउ। हाउ। एहियाहाउ। एहियाहाउ। एहिया२३४। औहोवा। रायस्पोपायस्
कृतायभूयसेहुत्। होवा३हा३। आ२यि। हिया२३१११। हाउ। हाउ। हाउ। एहियाहाउ। एहि०।

| | |
|---|---|
| ॥ २७६ ॥ वार्यात्रिष्टुबुरुद्रा | ॥ २७६ ॥ संगन्यासमा. |
| ॥ २७७ ॥ वामदेवोगायत्रीविश्वेदेवा | ॥ २७७ ॥ सरपाळनाजपमा. |

एहिया० । उतायि । सदा । वार्द्धःसा२३४खा । होवा३हा३ । आ२यि । हिया२३१११ । हाउ । हाउ
। हाउ । एहियाहाउ । एहियाहाउ । एहिया३४ । ओहोवा । आगन्वाममिदंवृहद्द्रस् । होवा३हा२ । आ
२यि । हिया२३१११ । हाउ । हाउ । हाउ । एहियाहाउ । एहिया० । एहिया० । कयाशचायि । घ्या
२वा२३४र्त्ता । होवा३हा३ । आ२यि । हिया२३१११ । हाउ३ । एहियाहाउ । एहिया० । एहिया३४
ओहोवा । इदंवाममिदंवृहद्द्रस् । होवा३हा२ । आ२यि । हिया२३१११ । हाउ३ । एहियाहाउ । एहि० ।
ए० । कयाशचायि । घ्या२वा२३४र्त्ता । होवा३हा३ । आ२यि । हिया२३१११ । हाउ३ । एहियाहाउ ।
एहियाहाउ । एहिया३४ । ओहोवा । चराचरायवृहतइदंवाममिदंवृहद्द्रस् ॥ ३० ॥ १६ ॥ ॥३२॥ ॥ २७८ ॥
होयिया । होयिया । होयिया२४३पिव । मत्स्वाहाउ । ओजोहाउ । सहोहाउ । वल६ हाउ । इंद्रोहाउ
। वयोहाउ । वृहद्धाउ । ऋत६ हाउ । स्वर्होउ । ज्योतिर्होउ । दा३धे । हाउ । हाउ । हाउ । ओहो१यि
। ओहो१यि । ओहो१यि । सोमाम् । इंद्रमा । दतुत्वा । दतुत्वा । दतुत्वा । हाउ । हाउ । हाउ । ओहो

१यि । औ० । औ० । पिबासोमाम् । इंद्रमा । दतुत्वा । द० । द० । हाउ । हाउ । हाउ । औहो१यि ।
औ० । औ० । पिबासोमाम् । इंद्रमा । दतुत्वा । द० । द० । मत्स्वाहाउ । ओजो० । सहो० । ब० ।
इंद्रो० । वयो० । वृह० । ऋतद्ध० । स्वहो० । ज्योति० । दा३धे । हाउ । हाउ । हाउ । औहो१यि ।
औ० । औ० । यंतेसुपा । वाहरिया । श्वाद्री२ः । श्वाद्री२ः । श्वाद्रीः । हाउ । हाउ । हाउ । औहो१
यि । औ० । औ० । यंतेसुपा । वाहरिया । श्वाद्री२ः । श्वाद्री२ः । श्वाद्रिः । हाउ । हाउ । हाउ । औहो
१यि । औ० । औ० । यंतेसुपा । वाहरिया । श्वाद्री२ः । श्वाद्री२ः । श्वाद्रिः । मत्स्वाहाउ । ओजो० । स-
हो० । धलद्ध्हा० । इंद्रोहा० । वयोहा० । वृहद्धा० । ऋतद्ध्हा० । स्वहो० । ज्योतिर्हो० । दा३धे । हा
उ । हाउ । हाउ । औहो१यि । औ० । औ० । सोतुर्वाहू । भ्याद्ध्सुयतो । नावा२ । नावा२ । नावा ।
हाउ । हाउ । हाउ । औहो१यि । औ० । औ० । सोतुर्वाहू । भ्याद्ध्सुयतो । नावा२ । नावा२ । नावा
। हाउ । हाउ । हाउ । औहो१यि । औ० । औ० । सोतुर्वाहू । भ्याद्ध्सुयतो । नावा२ । नावा२ । ना

वौ । सधमे । सधमे । साधा३मायि । ऋतमे । ऋतमे । आर्त्ता३मायि । इयाहाउ । इया० । इयपिमव-
स्वा३ । हाउवा३ । ई२३१११ ॥ ३१ ॥ १७ ॥ ॥ २७९ ॥ वीहायवायि । वीहा० । वीहा०
। वीहायवायि । वी० । वी० । कयानश्चायि । त्रआ२भू२३४वात् । ऊतायिसदा । वाद्धसा२३४रवा ।
कयाशचायि । प्रया२वा२३४र्त्ता । वीहायवायि । वाहा० । वीहा० । वीहायवायि वीहाय० । वीहा ।
या२वा२३४ । औहोवा । ए । संयमन्नव्यायमन्वियमन्नसमायमन्येकचोदरसर्पिणस्तभ्यो नमा२३१
११ ॥ ३३ ॥ १८ ॥ ॥ २८० ॥ हाउ । हाउ । हाउ । सतूद्दस्तर । सतूद्दस्तर । सतूद्दस्तर । दुस्त
। रान् । दुस्त । रान् । दुस्त । रान् । दानेनादान । दानेनादानं । दानेनादानं । हाउ । हाउ । हाउ । अह-
मस्मिप्रथमाजाऋता२३स्या२३१११ । हाउ । हाउ । हाउ । सेतू६स्तर । से०र । से०र । दुस्त । रान् ।
दु० । रा० । दु० । रा० । अक्रोधेनक्रोधं । अक्रोधेनक्रोधं । अक्रोधेनक्रोधं । हाउ । हाउ । हाउ । पु-

॥ २७९ ॥ प्रनापातर्गायत्राचश्वदया
॥ २८० ॥ प्रजापातिऋषिरनुष्टुप्छन्दः

॥ २७९ ॥ एकादशान्यासमा
॥ २८० ॥ भासाद्रिमा एकोमा कृषोत्सर्गेनान्यासमा अग-
[ न्यासमौ पुरुषसूक्तमा ]

वैदेवेभ्योअमृतस्यना२३मा२३१११। हाउ। हाउ। हाउ। सेतुं॑स्तर। से०र। से०र। दुस्त। रा-
न्। दु०। रा०। दु०। रा०। श्रद्धयाश्रद्धां। श्रद्धयाश्रद्धां। श्रद्धयाश्रद्धां। हाउ। हाउ। हाउ। यो-
माददातिसयिदेवमा२३वा२३१११त्। हाउ। हाउ। हाउ। सेतुं॑स्तर। से०। से०। दुस्त। रान्।
दु०। रा०। दु०। रा०। सत्येनानृतं। सत्येना०। सत्येना०। हाउ। हाउ। हाउ। अहमन्नमन्नमदं
तमा२३र्मी२३१११। हाउ। हाउ। हाउवा। एषागतिः। एषागतिः। एषागतिः। एतदमृतं। एत-
दमृतं। एतदमृतं। स्वर्गछ। स्वर्गछ। स्वर्गछ। ज्योतिर्गछ। ज्योतिर्गछ। ज्योतिर्गछ। सेतुं॑स्तीर्त्वाचतु
रा२३१११ः॥ २४ ॥ १८ ॥ ॥ ७ ॥ इतिश्री मंत्रसंहितायामारण्यगाने द्वितीयस्या
र्द्धः प्रपाठकः॥ ७ ॥ ॥ अर्कपर्व ॥ ॥ २८१ ॥ हाउ। हाउ। हाउ। आयुः। आयुः। आ
युः। सात्यं। सात्यं। सात्यं। इंद्रन्नरो। नेऽ३माधि। ताहवंताथि। यत्पारियाः। युनज। ताविधियस्ताः।
शूरोनृषा। ता३श्रव। सश्रकामाथि। आगामताथि। वजेभ। जातुवन्नाः। हाउ। हाउ। हाउ। आयुः

। आयुः । आयुः । सात्यं । सात्यं । सत्या३४ । औहोवा । ई२३४५ ॥ १ ॥ १ ॥ ॥ २८२ ॥ हा
उ । हाउ । हाउ । आनोहिय । आनो० । आनो० । मनदोहम् । मन०म् । मन० । इंद्रन्नरो । ने३म
धि । ताहवंताधि । यत्पारियाः । युनज । तायिधियस्ताः । शूरोनृपा । ता३श्रव । सश्वकामाधि । आ
गोमताधि । व्रजेभ । जातुवन्नाः । हाउ । हाउ । हाउ । आनोहिय । आनो० । आनो० । मनदोहम्
। मनदोहम् । मना२३ । दोहा३४औहोवा । ई२३४५ ॥ २ ॥ २ ॥ ॥ २८३ ॥ हाउ । हाउ । हा
उ । हद्दे हद्दे हद्दे हद्दे । हद्दे ० । हद्दे ० । हाउ । हाउ । हाउ । इंद्रन्नरो । ने३मधि । ताहवंताधि । यत्पारि-
याः । युनज । तायिधियस्ताः । शूरोनृपा । ता३श्रव । सश्वकामाधि । आगोमताधि । व्रजेभ । जातुव
न्नाः । हाउ । हाउ । हाउ । हद्दे हद्दे हद्दे हद्दे । हद्दे ० । हद्दे ० । हाउहाउहाउ । वा३ । ई२३४५ ॥
॥ ५ ॥ ३ ॥ ॥ २८४ ॥ हाउ । हाउ । हाउ । इहा । हद्दे हद्दे हद्दे । इहा । हद्दे ० । इहा । हद्दे ०

॥ २८२ ॥ वसिष्ठस्त्रिष्टुबिन्द्र ॥ २८२ ॥ अगन्यासमा.
॥ २८३ ॥ प्रजापतिस्त्रिष्टुबिन्द्र. ॥ २८३ ॥ अगन्यासमा वृषोत्सर्गेना न्यासमा.
॥ २८४ ॥ प्रजापतिस्त्रिष्टुबिन्द्र ॥ २८४ ॥ अगन्यासमा वृषोत्सर्गेना न्यासमा

। हाउ । हाउ । हाउ । इंद्रन्नरो । ने३माधि । ताहवंतायि । यत्पारियाः । यनज । तायिधियस्ताः ।
शूरान्नृपा । ता३श्रव । सश्वकामायि । आगोमतायि । व्रजेभ । जातुवन्नाः । हाउ । हाउ । हाउ । इहा
हद् हद् हद् । इहा । हद् ० । इहा । हद् ० । हाउहाउहाउ । वा३ । ई२३१११ ॥ ६ ॥ ४ ॥ ॥
॥ ॥ २८५ ॥ हाउ । हाउ । हाउ । यशोहाउ । यशो० । यशो० । वर्चोहाउ । वर्चो० । वर्चो० ।
आस्मिन्हायि । आस्मिन्हायि । आस्मिन्हा३१उ । वा२ । तवेदिंद्रावमंवसु । त्वंपुष्यसिमध्यमं । सत्राविः
श्वस्यपरमस्यराजसि । नकिष्ट्वागोपूवृण्वते । हाउ । हाउ । हाउ । यशोहाउ । यशो० । यशो० । वर्चोहा
उ । वर्चो० । वर्चो० आस्मिन्हायि । आस्मिन्हायि । आस्मिन्हा३१उ । वा२ । आयुर्विश्वायुर्विश्वंवि-
श्वमायुरशीमहिप्रजांत्वष्टरधिनिधेह्यस्मेशतंजीवेमशरदोवयंते२३१११ ॥ १२ ॥ ५ ॥ इतिश्री
मंत्रसंहितायामारण्यगाने द्वितीयः प्रपाठकः ॥ १ ॥ अथ तृतीयः प्रपाठकः प्रारंभः ॥
॥ ॥ २८६ ॥ हाउहाउहाउवा । विश्वतोदावनविश्वतोनआभर । हाउहाउहाउवा । यंत्वाशवि

| | |
|---|---|
| ॥ २८५ ॥ प्रजापतिर्वृहत्ताद्वः | ॥ २८५ ॥ द्वारपाळनासूक्तमा. |
| ॥ २८६ ॥ प्रजापति पंक्तिः. | ॥ २८६ ॥ आयु शांतिमा. यद्रीसां. |

घर्मीमहे । हाउहाउहाउ । आयुः । हाउहाउहाउवा । सुवः । हाउहाउहाउवा । ज्योतिः । हाउहाउहाउवा३
। ई२३१११ ॥ १२ ॥ १ ॥ इतिश्री मंत्रसंहितायामारण्यगाने तृतीयस्यार्द्धः प्रपाठकः ॥
॥ २८७ ॥ सुरूपकृत्नूमुतयेसुदुघामा । वगो२ । दुहया३१ । वा२३ । ई२३४डा । सू२३४वाः । जु
हूमा२३सी । द्यविद्यविया३१वा२३ । ज्यो२३४र्ताः ॥ ४ ॥ १ ॥ ७ ॥ ॥ २८८ ॥ हाउ । हाउ
हाउ । शुक्रं । शुक्रं । शुक्रं । शुक्रद् शुक्रं । शुक्रद् शुक्रं । शुक्रद् शुक्रं । शुक्रद् शूक्रं । शुक्रद् शूक्रं । शुक्रद्
शूक्रं । नियुत्वानवाय३वागा१हीर । अयद् शुक्रोअ३यामा१यिता२यि । गंतासिसुन्व३तोगृ१हा२३म्
। हाउ । हाउ । हाउ । शुक्रं । शुक्रं । शुक्रं । शुक्रद् शुक्रं । शुक्रद् शुक्रं । शुक्रद् शुक्रं । शुक्रद् शूक्रं । शुक्रद्
शूक्रं । शुक्रं । शू२ । क्रा२३४ । औहोवा । ए । शुक्रं । ए । शुक्रं । ए । शुक्रं ॥ ७ ॥ २ ॥ ॥
॥ २८९ ॥ हाउ । हाउ । हाउ । चंद्रं । चंद्रं । चंद्रं । चंद्रंचंद्रं । चंद्रंचंद्रं । चंद्रचद्रं । चद्रचांद्र । चद्रचांद्रं ।

॥ २८७ ॥ मधुछंदागायत्रींद्रः
॥ २८८ ॥ प्रजापतिर्गायत्र्यावायु
॥ २८९ ॥ प्रजापतिर्गायत्र्यीर्त्वर्गुर्चंद्रमसौ.

॥ २८७ ॥ नादिश्चाध्वमा दर्यैश्चाध्वमा पिएसहितानां मू-
॥ २८८ ॥ शाद्रिमा [ ळशातिमा.
॥ २८९ ॥ शाद्रिमा

चंद्रंचांद्रं । अत्राहगोर३मान्वा१ता२ । नामत्वष्टुर३पायिचा१या२म् । इत्थाचंद्रमा३सोगृ१हा२
३यि।हाउ । हाउ । हाउ । चंद्रं । चंद्रं । चंद्रं । चंद्रंचंद्रं । चंद्रंचंद्रं । चंद्रंचंद्रं । चंद्रंचांद्रं । चंद्रंचांद्रं । चं
द्रं । चा२ । द्रा२३४ । औहोवा । ए । चंद्रं । ए । चंद्रं । ए । चंद्रं ॥ ८ ॥ ३ ॥ ॥ २९० ॥ हाउहोहायि
। हाउहोहायि । हाउहोहायि । अंतरिक्षꣳसुवर्दिवंजग । न्मा । अंतरिक्षꣳसुवर्दिवंजग । न्मा । अन्त
रिक्षꣳसुवर्दिवंजग । न्मा । परात्परमैरय । ता । परात्परमैरय । ता । परात्परमैरय । त । औहोवाहा
उ । वा । ए । ब्रह्मोदिवोमूर्द्धादेवमादनोधर्माज्योतिः ॥ १५ ॥ ४ ॥ ॥ २९१ ॥ हाउहोहायि । हा०
। हा० । अंतरिक्षꣳसुवर्दिवंजग । न्मा । अंतरि० । अंतरि० । परात्परमैरय । ता । परात्पर० । ता । प-
रात्परमैरय । त । औहोवाहाउ । वा । ए । पृथिव्यंतरिक्षंद्यौरापःकनिक्रंदात्सिंधुरापोमरुतोमादयंतां
धर्माज्योतिः ॥ १६ ॥ ५ ॥ ६ ॥ ॥ ॥ २९२ ॥ हाउहोहायि । हाउहोहायि । हाउहोहायि ।

॥ २९० ॥ विष्णुस्त्रुष्टुब्विद्रः
॥ २९१ ॥ विष्णुस्त्रुष्टुब्विंद्रः
॥ २९२ ॥ विष्णुस्त्रुष्टुब्विंद्र-

॥ २९० ॥ एकादशान्यासमां. विष्णुसूक्तमां.
॥ २९१ ॥ विष्णुसूक्तमां.
॥ २९२ ॥ विष्णुसूक्तमां.

यि। अंतरिक्षꣳ सुवर्दिवंजग । न्मा । अंतरिक्ष० । अंतरिक्ष० । परात्परमैरय । ता । परात्परमैरय । ता
। परात्परमैरय । ता । दिवोमूर्द्धानꣳ समैरयन् । हायि३ । हो२३४वा । यशोघर्मोज्योतिः । यशःसमै
रयन् । हायि३ । हो२३४वा । तेजोघर्मोज्योतिः । तेजःसमैरयन् । हायि३ । हो२३४वा । सुवर्घर्मोज्यो
तिः । सुवःसमैरयन् । हायि३ । हो२३४वा । ज्योतिर्घर्मोज्योतिः । ज्योतिःसमैरयन् । हायि३ । हो२३
४५वा६५६ । घर्मोघर्मोज्योतिः ॥ १७ ॥ ६ ॥ ॥ २९३ ॥ हाउहोहायि । हाउहोहायि । हा-
उहोहायि । अंतरिक्षꣳ सुवर्दिवंजग । न्मा । अंतरिक्ष० । अंतरिक्ष० । परात्परमैरय । ता । परात्परमै
रय । ता । परात्परमैरय । त । औहोवाहाउ । वा । ए । इडांयछ । हस्कांतियछ । ए । मनओजोयछ ।
ए । मनोमाहिमानंयछ । ए । यशस्त्विषिंयछ । ए । प्रजांवर्चोयछ । ए । पशून्विशंयछ । ए । ब्रह्मक्षत्रं-
यछ । ए । स्वर्ज्योतिर्यछ ॥ १८ ॥ ७ ॥ ॥ २९४ ॥ हाउहोहायि । हाउहोहायि । हाउहोहायि । अं
तरिक्षꣳ सुवर्दिवंजग । न्मा । अंतरिक्ष० । अंतरिक्ष० । परात्परमैरय । ता । परा० । ता । परा० । ता

॥ २९३ ॥ विष्णुरनुष्टुबिंद्रः ॥ २९३ ॥ विष्णुसूक्तमा.
॥ २९४ ॥ विष्णुरनुष्टुबिंद्रः ॥ २९४ ॥ विष्णुसूक्तमा.

। यज्जायथाअपूर्व्या । मघवन्वृत्रहत्यायाः । तत्पृथिवीमप्राथायाः । तदस्ताभ्नाउतोदा।यिवाम् । हाउ
होहायि । हा० । हा० । अंतरिक्षद्भ्सुवर्दिवंजग । न्मा । अंतरिक्ष० । अंतरिक्ष० । परात्परमेरय । ता ।
परा० । ता । परा० । त । ओंहोवाहाउ । वा । ए । तजोधर्मःसंक्रीडतेशिशुमतीर्वायुगोपास्तेजस्वतीमं
हाग्निर्भुवनानिचक्रदुः । इड्इडा२३१११ । ई२३४५ ॥ १९ ॥ ८ ॥ ॥ २९५ ॥ हाउहोवा । हाउहोवा ।
हाउहोवा । परात्परमेरय । ता । परात्परमेरय । ता । परात्परमेरय । त । ओंहोवाहाउ । वा । इंद्रो-
धेनुः । इंद्राधेनुः । इंद्राधेनुः । आपोधेनुः । आपोधेनुः । आपोधेनुः । भूमिर्धेनुः । भूमि० । भूमि० ।
अंतरिक्षंधेनु । अंतरि० । अंतरि० । द्यौर्धेनुः । द्यौर्धेनुः । द्यौर्धेनुः । परंधेनु । परं० । परं० । व्रतंधेनु ।
व्रतंधेनु । व्रतं० । सत्यंधेनु । सत्यं० । सत्यं० । ऋतंधेनु । ऋतं० । ऋतं० । इडाधेनुः । इडा० । इडा०
स्वर्द्धेनुः । स्वर्द्धेनुः । स्वर्द्धेनुः । ज्योतिर्द्धेनुः । ज्योति० । ज्योति० ॥ २० ॥ ९ ॥ ॥ २९६ ॥ हा

॥ २९५ ॥ विष्णुरनुष्टुबिंद्रः
॥ २९६ ॥ विष्णुरनुष्टुबिंद्रः

॥ २९५ ॥ विष्णुसूक्तमा.
॥ २९६ ॥ विष्णुसूक्तमा.

उहोवा। हाउहोवा। हाउहोवा। परात्परमेरय। ता। परा०। ता। परा०। ता। यज्जायथाः। अपूर्विया। अपूर्विया२। आपूर्वा२३४या। मघवन्वृ। त्रहत्याया। त्रहत्याया३। त्राहत्या२३४या। तत्पृथिवीम्। अप्राथया॰। अप्राथया३ः। आप्राथा२३४याः। तदस्तभ्नाः। उतोदिवाम्। उतोदिवा३म्। उतोदा२३४यिवाम्। हाउहोवा। हा०। हा०। परात्परमेरय। ता। परा०। ता। परा०। त। ओहोवाहाउ। वा ए। तेजोघर्म संक्रीडतेवायुगोपास्तजस्वतीर्मरुद्भिर्भुवनानिचक्रदुः॥ २१ ॥ १० ॥ ॥

॥ २९७ ॥ हा२ऊवाक्। हा२ऊवाक्। हा२ऊवाक्। होवा। होवा। होवा३। हाउवा। ए। तोकप्रजागर्भोनोयमदध्मह्याचपराचपार्थिभिश्वरता२३११११॥ २२ ॥ ११ ॥

॥ २९८ ॥ हा२ऊवाक्। हा२ऊवाक्। हा२ऊवाक्। होवा। होवा। होवा। अयद्ध सशिङ्क्षे ३। होयि। यस्माद्यावापृथिवीर्भुवनानिचक्रदु॰। होयि। अयद्ध साशिङ्क्षे ३। होयि। यस्मादापओपधयोभुवनानिचक्रदु॰। होयि। अयद्ध साशिङ्क्षे ३। हो

| | |
|---|---|
| ॥ २९७ ॥ विष्णुरतुष्टुावद्ध | ॥ २९७ ॥ विष्णुसूक्तमा |
| ॥ २९८ ॥ विष्णुरतुष्टुर्विद्ध | ॥ २९८ ॥ विष्णुसूक्तमा |

यि । यस्मात्समुद्रियाभुवनानिचक्रदुः । होयि । अयᳲसाशिङ्क्ते२ । होयि । यस्माद्विश्वाभूत्वा-
भुवनानिचक्रदुः । होयि । हा२ऊवाक् । हा२ऊवाक् । हा२ऊवाक् । होवा । होवा । होवा३
। हाउवा । ए । आपः । आपः । आपा२३१११ः ॥ २३ ॥ १२ ॥ ७ ॥ ॥५३॥ ॥ २९९ ॥ हा
२ऊवाक् । हा२ऊवाक् । हा२ऊवाक् । होवा । होवा । होवा । येभिर्विया । श्वमैराया२ः । तेभिर्विया ।
शुहामादा२म् । येभिर्भूताम् । सहस्साहा२ः । तेभिस्तेजआपः । आपा२ः । येभिर्व्यंतरिक्षमैरया३ः । हा
उवा । ए । आपः । आपः । आपा२३१११ः ॥ २४ ॥ १३ ॥ ॥५४॥ ॥ ३०० ॥ हा२ऊवाक् । हा२
ऊवाक् । हा२ऊवाक् । होवा । होवा । होवा । यज्जायथाअपूहो२ । वोया२ । मघवन्वृत्रहाहो२ । त्वा
या२ । तत्पृथिवीमप्राहो२ । थाया२ः । तदस्तभ्नाउतोहो२यि । दायिवा२म् । हा२ऊवाक् । हा२ऊ-
वाक् । हा२ऊवाक् । होवा । होवा । होवा३ । हाउवा । ए । तेजोघर्मःसंक्रीडंतेशिशुमतीवायुगोपास्ते
जस्वतीर्मरुद्भिर्भुवनानिचक्रदू२३१११ः ॥ २५ ॥ १४ ॥ ॥ इतिश्री मंत्रसंहितायामारण्य

॥ २९९ ॥ विष्णुस्त्रिष्टुबिंद्र.
॥ ३०० ॥ विष्णुस्त्रिष्टुबिंद्र

॥ २९९ ॥ विष्णुसूक्तमा
॥ ३०० ॥ विष्णुसूक्तमा.

गाने तृतीयः प्रपाठकः ॥ ३ ॥ ऐंद्रपर्व ॥ ७ ॥ अथ चतुर्थः प्रपाठकः प्रारंभः ॥

॥५५॥ ॥ ३०१ ॥ औहोवाओहोवाऔहो३वा। अगन्मज्योतिः। अगन्मज्योतिः। अगन्मज्योतिः। अ-
मृताऽभूम। अमृताअभूम। अमृताअभूमा। तरिक्षंपृथिव्याध्यारुहामा। तरिक्षंपृथिव्याध्यारुहामा।
तरिक्षंपृथिव्याध्यारुहाम। दिवमंतरिक्षादध्यारुहाम। दिवमंतरि०। दिवमंत०। अविदामदेवान्।
अविदामदेवान्। अविदामदेवान्। समुदेवरगन्महि। समुदेवरगन्महि। समुदेवरगन्महि। औहोवा
औहोवाऔहो३वा। सुवर्ज्योती२३११११ः ॥ ४ ॥ १ ॥ ॥५६॥ ॥ ३०२ ॥ हाउ। हाउ। हाउ।
आनो२ह्मुवायि। आनो२ह्मुवायि। आनो२ह्मुवा२। या२३४औहोवा। रक्षतनोरक्षितारा२३१११ः
। हाउ। हाउ। २। आनो२ह्मुवायि। आनो२ह्मुवायि। आनो२ह्मुवा२। या२३४औहोवा। गोपायत
गोपायितारा२३१११ः। हाउ। ३ आनो२ह्मुवायि। आनो२ह्मुवायि। आनो२ह्मुवा२। या२३४औहो
वा। मयिवर्चः। अथोया१शा२ः। अथोयज्ञ। स्ययारपा१या२ः। परमेष्ठी। प्रजापा१ती२ः। द्विविधा

॥ ३०१ ॥ साय क्षिष्टुबिंद्रः
॥ ३०२ ॥ परमेष्ठ्यनुष्टुप्परमेष्ठी.

॥ ३०१ ॥ पुण्याहवाचनमां.
॥ ३०२ ॥ राक्षोघ्नमा.

मी। वदृह्हा१तू२३। हाउ। हाउ। हाउ। आनोरक्षुवायि। आनोरक्षुवायि। आनोरक्षुवा२। या
२३४आहोवा। रक्षतनोरक्षितारा२३१११:। हाउ। हाउ। हाउ। आनोरक्षुवायि। आनोरक्षुवा
यि। आनोरक्षुवा२। या२३४आहोवा। गोपायतगोपायितारा२३१११:। हाउ। हाउ। हाउ। आ
नोरक्षुवायि। आनोरक्षुवायि। आनोरक्षुवा२। या२३४ओहोवा। ए। रक्षतनोरक्षितारोगोपायत
गोपायितारः। ए। रक्षतनोरक्षितारोगोपायतगोपायितारः। ए। रक्षतनोरक्षितारोगोपायतगोपायि
तारा२३१११: ॥ ७॥ २ ॥ ॥१७१॥ ॥ २०३ ॥ ओवा२। ओवा२। ओवा२। संतपया। सी३समु।
यंतुवाजाः। संवृष्णिया। नी३अभि। मातिषाहाः। आप्यायसा। नो३अमृ। तायसोमा। दिविश्र
वा। सी३उत्त। मानिधिष्वा। ओवा२। ओवा२। ओ२। वा२३४। ओहोवा। एन्य। एन्य। एन्य ॥ १ ॥
॥ ३ ॥ ॥१८०॥ २०८ ॥ हाउ। हाउ। हाउ। हौवा३। हौवा३। हौया३। हाहहौवा३। हाहहौवा३। हाहहौवा३
। हौवा३। होया३। हौवा३। हो३वा२३१११। हो३वा२३१११। हो३वा२४। ओहोवा। त्वमिमाओ

॥ २०२ ॥ सोमाक्षिप्टुप्साम
॥ २०४ ॥ सोमाविराट्साम

॥ २०३ ॥ आगन्यासमी
॥ २०४ ॥ कलशस्थापनमा ( ओषधी नापयान्तु )

पर्धीःसोमविश्वाः। त्वमापोअजनयस्त्वंगाः। त्वमातनोरुर्वंतरिक्षं। त्वंज्योतिषावितमोववर्थ। हाउ।
हाउ। हाउ। हौवा३। हौवा३। हौवा३। हाहहौवा३। हाहहौवा३। हाहहौवा३। हौवा३। हौवा
३। हौवा३। हो३वा२३१११। हो३वा२३१११। हो३वा३४। औहोवा। ए। जनदिवमंतरिक्षंपृ
थिवींविश्वभोजसंपुरुरूपाअजीजनः। इट्इडा२३१११ ॥ १० ॥ ४ ॥ ॥ ३०५ ॥ होयिहा३
। इहोइहा३ ॥ होयिहा३। इहो०३ ॥ होयि०३। इहो०३ ॥ इमाउवांदिविष्टयाओहाउ। उस्राह-
वंतेअश्विनाओहाउ। अयंवामह्वेवसेशाचीवसूओ०। विशंविशंहिगच्छथा०। होयिहा३। इहोइ
हा३ ॥ होयि०३। इहो०३ ॥ होयि०३। इहोइहा३४। औहोवा। इ५हींहींहींहिं ॥ १५ ॥
॥ ५ ॥ ॥ ३०६ ॥ होयिहा। इहोइहा ॥ होयि०। इहो० ॥ होयि०। इहो० ॥ इमाउवांदिवि
ष्टयाहोहाउ। उस्राहवतेअश्विनाहोहाउ। अयंवामह्वेवसेशाचीवसूहो०। विशंविशंहिगच्छथाहो
०। होयिहा। इहोइहा ॥ होयि०। इहो० ॥ होयि०। इहोइहा३४। औहोवा। ई२। ई२। ई२ ॥

॥ ३०५ ॥ आश्विनीबृहत्याश्विनी
॥ ३०६ ॥ आश्विनाबृहत्याश्विना

॥ ३०५ ॥ अगन्यासमा
॥ ३०६ ॥ अगन्यासमा

॥ १६ ॥ ६ ॥ ॥ ३०७ ॥ हाउ । हाउ । हाउ । गावोहाउ । गावो० । गावो० । वृपभपत्नीहो
उ । वृपभपत्नी० । वृपभपत्नी० । वैराजपत्नीहाउ । वैराजप० । वैराजप० । विश्वरूपाहाउ । विश्व
रूपा० । विश्वरूपा० । अस्मासुरमध्वर्द्ध हाउ । अस्मासुरम० । अस्मासुरम० । तेमन्वतप्रथमंनामगो२
नाम् । त्रिःसप्तपरमंनामजा२नाम् । ताजानतीरभ्यनुपता२क्षाः । आविर्भुवन्नरुणीर्यशसागा२वाः ।
हाउ । हाउ । हाउ । गावोहाउ । गावो० । गावो० । वृपभपत्नीहाउ । वृपभप० । वृपभप० । वैराज
पत्नीहाउ । वैराजप० । वैराजप० । विश्वरूपाहाउ । विश्वरूपा० । विश्वरूपा० । अस्मासुरमध्वर्द्ध
हाउ । अस्मासुरम० । अस्मासुरमध्वा२३र्द्ध हाउ । वा । ए । गावोवृपभपत्नीवैराजपत्नीविश्वरूपा
अस्मासुरमध्वं । ए । गावोवृपभपत्नीवैराजपत्नीविश्वरूपाअस्मासुरमध्वं । ए । गावोवृपभपत्नीवैरा
जपत्नीविश्वरूपाअस्मासुरमध्वा२३४५म् ॥ १७ ॥ ७ ॥ ॥ ३०८ ॥ हाउहाउहाउवा । अ

॥ ३०७ ॥ गावस्त्रिष्टुब्गावः
३०८ ॥ गावस्त्रिष्टुब्गावः

॥ ३०७ ॥ वृषोत्सर्गेना न्यासमां. गौसूक्तमां.
॥ ३०८ ॥ वृषोत्सर्गेना न्यासमां.

ग्निमीडेपुरोहितं । देवेपुनिधिमाद्ध अहं । हाउहाउहाउवा । यज्ञस्यदेवमृत्विजं । देवेपुनिधिमाद्ध-अहं । हाउहाउहाउवा । होतारद्ध रत्नधातमं । देवेपुनिधिमाद्ध-अहं । हाउहाउहाउवा । ए । देवेपुनिधिमाद्ध-अहं । ए । देवेपुनिधिमाद्ध अहं । ए । देवेपुनिधिमाद्ध अहं ॥ १८ ॥ ८ ॥ ॥ इतिश्री मंत्रसंहितायामारण्यगाने चतुर्थस्यार्द्धः प्रपाठकः ॥

॥ २०९ ॥ हाउ । हाउ । हाउ । ऐरयत् । ऐरयत् । ऐरयत् । अपःसमैरयत् । अपःसमैरयत् । अपःसमैरयत् । भूतमैरयत् । भूतमैरयत् । भूतमैरयत् । अपाद्ध-गर्भोग्निरिडा । पाद्ध गर्भोग्निरिडा । पाद्ध गर्भोग्निरिडा । पृथिव्यागर्भोग्निरिडा । पृथिव्यागर्भोग्निरिडा । पृथिव्यागर्भोग्निरिडा । समन्यायंत्युपयंतिया २ इन्याः । समानमूर्वनद्यस्पृणा २ इन्तीं । तमुद्दशुचिद्ध-शुचयोदीदिवा २ इद्ध साम् । अपान्नपातमुपयन्तिया २ इपा २ इः । हाउ । हाउ । हाउ । ऐरयत् । ऐरयत् । ऐरयत् । अपःसमैरयत् । अपःसमैरयत् । अपःसमैरयत् । भूतमैरयत् ३ । अपाद्ध-गर्भोग्निरिडा । पाद्ध गर्भोग्निरिडा । पाद्ध गर्भोग्निरिडा । पृथिव्यागर्भोग्निरिडा । पृथिव्यागर्भोग्निरिडा

॥ २०९ ॥ पाराक्षिण्ड्व्यापः

॥ २०९ ॥ कलशस्थापनमां. एकादशश्राद्धमां. [सर्वपूजामां]

। पृथिव्यागर्भोग्निरिडा२ । हाउवा । ए । अग्निःशिशुकः । ए । शुक्रःशिशुकः । ए । तेजःशक्रस्यशक्रं । ए । तेजःसःप्रासमीचीः । ए । तेजउपानजारः । ए । सुवज्योता२३४५ः ॥ ३ ॥ ४ ॥ ॥ ३१० ॥ हाउ । हाउ । हाउ । ऐरयन् । ऐरयन् । ऐरयन् । समेरयन् । समेरयन् । समेरयन् । समस्वरन् । समस्वरन् । समस्वरन् । समन्यायंत्युपयंतीया२३न्याः । समानमुर्वनद्यस्पृणा२३न्ती । तमूङ्शुचीङ्शुचयोदीदिवा२३ङ्साम् । अपान्नपातमुपयंतिया२३पा२३ः । हाउ । हाउ । हाउ । ऐरयन् । ऐरयन् । ऐरयन् । समेरयन् । समेरयन् । समेरयन् । समस्वरन् । समस्वरन् । समस्वरा३न् । हाउ वा३ । ई२३४५ ॥ ४ ॥ ॥ २ ॥ ॥ ३११ ॥ हो२यि । हो२यि । हो२यि । आप्रागाङ्भद्रायुवतिः । हो२यि । हो२यि । हो२यि । अन्हःकेतूंत्समीर्छति । हो२यि । हो२यि । हो२यि । अभूद्भद्रानिवेशनी । हो२यि । हो२यि । हो२यि । विश्वस्यजगतोरात्री । हो२यि । हो२यि । होऽ२वा३ । हाउवा३ । ई२३४५ ॥ ६ ॥ ३ ॥

॥ ३१० ॥ पराक्षिप्टुप्त्वापः ॥ ३१० ॥ एकादशाधाद्धर्मा.

॥ ३११ ॥ रात्रिरनुष्टुप्रात्रिः ॥ ३११ ॥ कुंडपूजनमां. योनिपूजनमां.

॥ ३१२ ॥ हाउ । हाउ । हाउ । ऊ२ । ऊ२ । ऊऽ२ । वा३ । हाउवा३ । हस्हस् । अग्निःशोचिस्त-
पोहरः । प्रक्षस्यविष्णोअरुपस्यनूमा२३हाः । प्रनोवचाविदथाजातवेदा२३साधि । वैश्वानरायमति-
र्नव्यसेशू२३चीः । सोमइवपवतेचारुरग्ना२३या३धि । हाउ । हाउ । हाउ । ऊ२ । ऊ२ । ऊऽ२ । वा
३ । हाउवा३ । ई२३४५ ॥ ७ ॥ ४ ॥ ॥ ३१३ ॥ हाउहाउहाउ । ओहा । ओहा । ओहा ।
हाओवा । हाओवा । हाओवा । ऊ२ । ऊ२ । ऊ२ । ओ२ । ओ२ । ओ२ । हाउवाक् । हाउवाक् । हा
उवाक् । आयुर्यन् । आयुर्यन् । आयुर्यन् । एआयुः । एआयुः । एआयुः । आयुः । आयुः । आयुः ।
वयाः । वयाः । वयः । इन्द्रन्नरोनेमधिताहवा२न्तायि । यत्पार्यायुनजतेधिया२स्ताः । शूरोनृपाताश्रव
सश्चका२मायि । आगोमतिव्रजेभजातुवा२न्नाः । हाउहाउहाउ । ओहा । ओहा । ओहा । हाओवा । हा
ओवा । हाओवा । ऊ२ । ऊ२ । ऊ२ । ओ२ । ओ२ । ओ२ । हाउवाक् । हाउवाक् । हाउवाक् । आ-

॥ ३१२ ॥ विष्णुर्जगतीवैश्वानरः
॥ ३१३ ॥ जमदग्निस्त्रिष्टुबिन्द्रः

॥ ३१२ ॥ पचचक्रपूजनमां. रुद्रीमा. विष्णुसूक्तमां.
॥ ३१३ ॥ भासादिमा.

युर्यन् । आयुर्यन् । आयुर्वन । एआयुः । एआयुः । एआयुः । आयुः । आयुः । आयुः । वयाः । वयाः
। वा२ । या२३४ । औहोवा । ए । आयुर्द्धाअस्मभ्यंवर्चोधादेवेभ्या२३१११ः ॥ १६ ॥ ५ ॥ ॥
॥ ३१४ ॥ हुम् । हुम् । हुम् । हो । हो । हो । हट्. । हट्. । हट्. । ओहा । ओहा । ओहा । ओहोदि ।
ओहोयि । ओहोयि । इंद्रन्नरो । ने३माधि । ताहवंतायि । इंद्रन्नरो । ने३माधि । ताहवंतायि । इंद्रन्नरो । ने
३माधि । ताहवंतायि । वयोवृहत् । वयोवृहत् । वयोवृहत् । विभ्राष्टयेविधर्मणे । विभ्राष्टयेविधर्मणे । वि
भ्राष्टयेविधर्मणे । यत्पारियाः । युनज । तायिधियस्ताः । यत्पारियाः । युनज । तायिधियस्ताः । यत्पा
रियाः । युनज । तायिधियस्ताः । सत्यमोजः । सत्यमोजः । सत्यमोजः । रजःसुवः । रजःसुवः । रजःसु
वः । गूरोन्नृपा । ता३श्रव । सश्वकामायि । गूरोन्नृपा । ता३श्रव । सश्वकामायि । गूरोन्नृपा । ता३श्र
व । सश्वकामायि । भद्र६ सुधा । भद्र६ सुधा । भद्र६ सुधे । पमूर्जे । इपमूर्जे । इपमूर्जे । आगोमतायि ।
व्रजभ । जातुवन्नाः । आगोमतायि । व्रजभ । जातुवन्नाः । आगोमतायि । व्रजभ । जातुवन्नाः । वृह-

॥ ३१५ ॥ इंद्रोअग्न्यर्चिद्रः | ॥ ३१४ ॥ भासादिमां. रुद्रामां. अंगन्यासमां.

यशः । वृहद्यशः । वृहद्यशः । दिविदध३हस् । दिविदध३हस् । दिविदधे३ । हाउवा । वागिडासुवो
वृहद्रा२३१११ः ॥ १९ ॥ ६ ॥ ॥ ३१५ ॥ हाउ । हाउ । हाउ । आयिही । आयिही । आयि
ही । आयिहिया । आयिहिया । आयिहिया । आसाउ । आसाउ । आसाउ । आयाम् । आयाम् ।
आयाम् । नामाः । नामाः । नामाः । किट् । किट् । इंद्रन्नरोनेमधिताहवा२न्तायि । यत्पार्यायुनज-
तधिया२स्ताः । शूरोनृपालाश्रवसश्चका२मायि । आगोमतिव्रजेभज्ञातुवा२न्नाः । मना२३होयि । प्रा-
णा२३होयि । चक्षू२३होयि । श्रोत्रा२३६होयि । घोषा२३होयि । व्रता२३६होयि । भूता२३६हो-
यि । पाना२३९होयि । चित्ता२३८होयि । धीता२३८होयि । सुवा२३यिहोयि । ज्योता२३यिहो
२ । वा२३४ । औहोवा । ऊ२३१११ ॥ २० ॥ ७ ॥ इतिश्री मंत्रसंहितायामारण्यगाने
चतुर्थः प्रपाठकः ॥ ४ ॥ अथ पंचमः प्रपाठकः प्रारंभः ॥ ॥ ३१६ ॥ ॐ हाउ । हा

॥ ३१५ ॥ इन्द्रत्रिष्टुबिंद्र.
॥ ३१६ ॥ प्रथमस्याग्निर्यजूरात्मा.

॥ ३१५ ॥ भासादिमां. अगन्यासमां. रद्रीमां.
॥ ३१६ ॥ भासादिमां.

उ। हाउ। ऊ२। ऊ२। ऊ२। हुऊ२। हुऊ२। हुऊ२। इयाहाउ। इयाहाउ। इया३हाउ। वा३।
इट्इडा२३५११ ॥ १ ॥ १ ॥ ॥ ३१७ ॥ हाउहाउहाउवा। अग्निरस्मिजन्मनाजातवेदाः। इडा।
सुवः। इडा। हाउहाउहाउवा। घृतंमेचक्षुरमृतंमआसन्। इडा। सुवः। इडा। हाउहाउहाउवा।
त्रिधातुरर्कोरजसोविमानः। इडा। सुवः। इडा। हाउहाउहाउवा। अजस्रंज्योतिर्हविरस्मिसर्वं। इ-
डा। सुवः। इडा ॥ २ ॥ २ ॥ ॥ ३१८ ॥ हाउ। हाउ। हाउ। पात्यग्निर्विपोअग्रंपदंवेः। हा३
१उवा२३। सु२३४वाः। इह। हा३१उवा२३। ज्यो२३४तीः। हाउ। हाउ। हाउ। पातियव्हश्चरण
ꣳ सूरियास्या। हा३१उवा२३। सू२३४वाः। इह। हा३१उवा२३। ज्यो२३४तीः। हाउ। हाउ।
हाउ। पातिनाभासप्तशीर्षाणमाग्निः। हा३१उवा२३। सू२३४वाः। इह। हा३१उवा२३। ज्यो२३
४तीः। हाउ। हाउ। हाउ। पातिदेवानामुपमादमार्ष्वः। हा३१उवा२३। सू२३४वाः। इह। हा

| | |
|---|---|
| ॥ ३१७ ॥ अग्निरस्मिजन्मना. | ॥ ३१७ ॥ भासादिमां. |
| ॥ ३१८ ॥ अग्निस्त्रिष्टुब्वादि | ॥ ३१८ ॥ भासाग्निमां. |

३१उवा२३ । ज्यो२३४तीः ॥ ३ ॥ ३ ॥ ॥ ३१९ ॥ इया२ । इया२ । इया२ । इयाहाउ । इया० । इया० । इंद्रन्नरो । ने३मधि । ताहवंतायि । हवंते३ । हद्ह्‌ हद्ह् हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । हवंते३ । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । हवंते३ । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । हवंते । हवंते । हवंते । यत्पारियाः । युनज । तायि धियस्ताः । धियस्ताः३ । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । धियस्ता३ः । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । धियस्ता३ः । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । धियस्ताः । धियस्ताः । धियस्ताः । शूरान्नृपा । ता३श्रव । सश्वकामायि । चकामे३ । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । चकामे३ । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । चकामे३ । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । चकामे । चकामे । चकामे । आगोमतायि । व्रजभ । जातुवन्नाः । तुवन्ना३ः । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । तुवन्ना३ः । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । तुवन्ना३ः । हद्ह्‌ हद्ह्‌ हाद्ह्‌ हाद्ह्‌ हद्ह्‌ । तुवन्नः । तुवन्नः । तुवन्नः । इया२ । इया२ । इया२ । इयाहाउ । इयाहाउ । इया३हाउ । वा । ए । व्रतमसुवरशकुनः ॥ ४ ॥ ४ ॥ ॥ ३२० ॥ आजाओहो होहायि । त्यम्रसमिधानार्दा१दिवा२ः । जिव्हाओहोहोहायि । चरत्यंतारा१सानी२ । सत्वाओहोहोहा

| | |
|---|---|
| ॥ ३१९ ॥ आग्नेत्रिष्टुब्अग्निः<br>॥ ३२० ॥ अग्निपंक्तिरग्निः | ॥ ३१९ ॥ आसादिमां.<br>॥ ३२० ॥ आसादिमां. |

यि । नाअग्नेपयसावसृ३वीत् । रयिंवर्चोदशोहा३ । हुम्मा२ । दा । औ३होवा । हो५इ । डा ॥ ५ ॥
॥ ५ ॥ ॥ ३२१ ॥ अधिप । तायि । मित्रप । तायि । क्षत्रप । तायि । स्वःप । तायि । धनपता२
यि । ना२माः । मन्युनावृत्रहासूर्येणस्वराड्यज्ञेनमघवादक्षिणास्यप्रियातनूराज्ञाविशंदाधार । तूपभ-
रत्वष्टावृत्रेणशचीपतिरन्नेनगयःपृथिव्यासृणिकाग्निनाविश्वंभृतम । भ्यमवोवायुनाविश्वाःप्रजाअभ्य
पवथावषट्कारेणाध्रभावसोमेनसोमपाःसमित्यापरमेष्ठी । येदेवादेवाः । दिवीपदः । स्थतेभ्योवादे
वादेवेभ्यानमः । येदेवादेवाः । अंतरिक्षसदः । स्थतेभ्योवादेवादेवेभ्यानमः । येदेवादेवाः । पृथिवीप
दः । स्थतेभ्योवादेवादेवेभ्योनमः । यदेवादेवाः । अप्सुपदः । स्थतेभ्योवादेवादेवेभ्योनमः । येदेवादे
वाः । दिक्षुसदः । स्थतेभ्योवादेवादेवेभ्यानमः । यदेवादेवाः । आशासदः । स्थतेभ्योवादेवादेवेभ्योन
मः । अवज्यामिवधन्वनोवितमन्युन्नयामसिमृडतांनइहअस्मभ्यं । इडा२३भा । यइदंविश्वंभूतं । यु-
यो३ । आउं । वा२३ । ना२३४माः ॥ ६ ॥ ६ ॥ ॥ ३२२ ॥ अधिप । तायि । मित्रप । तायि । क्षत्रप

॥ ३२१ ॥ देव उ क्षत्रिरुक्षोलिंगोक्तादेवताः
॥ ३२२ ॥ देवाउत्क्षतिरुक्षोलिंगोक्तादेवताः

॥ ३२१ ॥ वृषोत्सर्गन्यासमां. रुद्रीमां. आसादिमां. प्रदक्षिणामां
॥ ३२२ ॥ वृषोत्सर्गन्यासमां. रुद्रीमां. आसादिमां. स्तुतिमां.

।तायि। स्वःप।तायि। धनपता२यि। ना२माः। नमउच्चतिभ्यश्चोच्चन्वानेभ्यश्चनमोनिषंगिभ्यश्चो
पवीतिभ्यश्चनमोस्यभ्यश्चप्रतिदधानेभ्यश्चनमःप्रविध्यभ्यश्चप्रव्याधिभ्यश्चनमःसरस्वद्भ्यश्चासारिभ्यश्च-
नम.श्रितेभ्यश्चश्रायिभ्यश्चनमस्तिष्ठभ्यश्चोपतिष्ठभ्यश्चनमोयतेचवियतेचनमःपथेचाविपथायच। अव
ज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइहअस्मभ्यं। इडा२३भा।यइदंविश्वंभूतंयुयो३ ।आउ।
वा२३।ना२३४माः॥७॥ ७॥ ॥७७॥ ॥ ३२३ ॥ अधिप।तायि।मित्रप।तायि। क्षत्रप।तायि।स्वः
प।तायि। धनपता२यि। ना२माः।नमोन्नायनमोन्नपतयएकाक्षायचावपन्नादायचनमोनमः।रुद्रा
यतीरसदेनम.स्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरिणेचनमस्त्रियंबकायचकापर्द्दिनेचनमआश्रा
यभ्यश्चप्रत्याश्रायिभ्यश्चनम.क्रव्यभ्यश्चविरिफेभ्यश्चनम.संवृतचविवृतेच। अवज्यामिवधन्वनोवितेम
न्युन्नयामसिमृडतानइहअस्मभ्यं। इडा२३भा। यइदंविश्वंभूतं। युयो३। आउ।वा२३। ना२३४माः
॥८॥८॥ ॥७८॥ ॥ ३२४ ॥ उहुवाहाउ। उहुवा०। उहुवा०। सहस्रशीर्षाःपूरु२३षाः। सहस्राक्ष.सह

॥ ३२३ ॥ दयाउ रुतिद्धा गाक्तारवता ॥ ३२३ ॥ व्रतान्सर्ग यास्मा ग मा भासादिमा नमस्कारमा
॥ ३२४ ॥ पचानापद्मोगुप्तुपक ॥ ३२४ ॥ पचचत्रपु. नमा विष्णुसूक्तमा एकादशन्यासमा

स्वा२३पात् । सभूमिङ् सर्वतावा२३त्वा । अत्यतिष्ठद्दशांगू२३लाम् । उहुवाहाउ । उहुवाहाउ । उहु
वा३हाउ । वा३ । इट्इडा२३१११ ॥ १२ ॥ ९ ॥ ॥ ३२५ ॥ उहुवोहोवा२ । उहुवोहोवा२ । उ
हुवोहोवा२ । त्रिपादूर्ध्वउदैत्पुरु२३षाः । पादोस्येहाभवत्पू२३नाः । तथाविष्वङ्व्यक्रा२३मात् । अ
शनानशनेआ२३भी । उहुवोहोवा२ । उहुवोहोवा२ । उहुवो । हो२वा२३४ । ओहोवा । ई२३४डा
। उहुवोहोवा२ । उहुवोहोवा२ । उहुवो । हो२ । वा२३४ । ओहोवा । सू२३४वाः । उहुवोहोवा२ ।
उहुवोहोवा२ । उहुवो । हो२ । वा२३४ । ओहोवा । ऊ२३१११ ॥ १४ ॥ १० ॥ ॥ ३२६ ॥ इ
याहोवा२ । इयाहोवा२ । इयाहोवा२ । पुरुषएवेद७सा२३र्वाम् । यद्भूतंयच्चभावा२३याम् । पादोस्य
सर्वाभूता२३नी । त्रिपादस्यामृतं १२३इवी । इयोहोवा२ । इयोहोवा२ । इयो । हो२ । वा२३४ ।
ओहोवा । इ२३४डा । इयोहोवा२ । इयोहोवा२ । इयो । हो२ । वा२३४ । ओहोवा । ज्यो२३४ती:

॥ ३२५ ॥ पचानापुरुपोनष्टुप्पुरुष.
॥ ३२६ ॥ पचानापुरुषोनुष्टुप्पुरुष.

रुद्रीमां. भासादिमा. दशावोधखानमा
॥ ३२५ ॥ रुद्रीमा भासादिमां विष्णुसूक्तमां.
॥ ३२६ ॥ रुद्रीमां. भासादिमां. विष्णुसूक्तमां.

। इयोहोवा१ । इयाहोवा२ । इया । होर । वार३४ । ओहोवा । ई२३१११ ॥ १५ ॥ ११ ॥ ॥
॥ ३२७ ॥ हाउ । हाउ । हाउ । तावानस्य । महा२३यिमा२ । हाउ । हाउ । हाउ । ततोज्यायाँ
श्च । पूरु२३षाः । हाउ । हाउ । हाउ । उतामृतत्वस्येशा२३नाः । हाउ । हाउ । हाउ । यदन्नेना
तिरोहा२३ता३ । हाउहाउहाउ । वा३ । इट्इडा२३१११ ॥ १६ ॥ १२ ॥ ॥ ३२८ ॥ हाउहाउ
हाउवा । ततोविराडजायत । हाउहाउहाउवा । विराजोअधिपूरुषः । हाउहाउहाउवा । सजातोअ
त्यरिच्यत । हाउहाउहाउवा । पश्चाद्भूमिमथोपुरः । हाउहाउहाउवा३ । इ२३१११ ॥ १७ ॥ १३ ॥
॥ ७ ॥ ॥ ३२९ ॥ हाउ । हाउ । हाउ । अस्मीनास्मिन् । अस्मीनस्मिन् । अस्मीनस्मिन् । नृ
म्णायिनृम्णं । नृम्णायिनृम्णं । नृम्णायिनृम्णं । निधायिमाहे । निधायिमाहे । नि[illegible]यिमाहे । क[illegible]
[illegible]आभू१वाद्य । अन्नोम्मदाव२धाःता१स्वा२ । कयासचित्र२यावा१र्त्ता२३ । हाउ । हाउ । हा

॥ ३२७ ॥ रुद्रीमां. भासादिमां. विष्णुसूक्तमा.
॥ ३२८ ॥ रुद्रीमां. भासादिमां. विष्णुसूक्तमां.
॥ ३२९ ॥ विष्णुसूक्तमां. रुद्रीमां. भासादि[illegible].

॥ ३२७ ॥ [illegible] पुरुषोनुष्टुप्पुरुषः
॥ ३२८ ॥ [illegible] पुरुषोनुष्टुप्पुरुषः
॥ ३२९ ॥ [illegible] पुरुषः

उ। अस्मीनस्मिन्। अस्मीनस्मिन्। अस्मीनस्मिन्। नृम्णायिनृम्णं। नृम्णायिनृम्णं। नृम्णायिनृ
म्णं। निधायिमाहे। निधायिमाहे। निधा२३यि। मा२। हा२३४। औहोवा। सुवर्ज्योती२३१११:
॥ १८ ॥ १४ ॥ ॥१८४॥ ॥ ३२० ॥ प्रतिष्ठासिप्रति। ष्ठा। प्रतिष्ठासिप्रति। ष्ठा। प्रतिष्ठासिप्रति। ष्ठा।
वर्चोसिमनोसिऐही। मन्येवांद्यावापृथिवीसुभोजसावेही। येअप्रथेथाममितमभियोजनामेही। द्या
वापृथिवीभवतᳲस्योनाऐही। तेनोमुंचतमᳲहसाऐही। प्रतिष्ठासिप्रति। ष्ठा। प्रतिष्ठासिप्रति। ष्ठा।
प्रतिष्ठासिप्रति। ष्ठा। वर्चोसिमनोसिऐही३। हाउवा। ए। भूतं। ए। भूतं। ए। भूतं ॥ २१ ॥ १५ ॥

॥ इतिश्री मंत्रसंहितायामारण्यगाने पंचमस्यार्द्धः प्रपाठकः ॥ ॥

॥१८५॥ ॥ ३२१ ॥ हा
उ। हाउ। हाउ। अहमन्नं। अहमन्नं। अहमन्नं। अहमन्नादो। हमन्नादो। हमन्नादो। हंविधारयो।
हंविधारयो। हंविधारयः। हाउ। हाउ। हाउ। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामु। ता। सत-
स्यब्रह्मणोव। चाः। तेनमासᳲ सृजाम। साथि। हाउ। हाउ। हाउ। अहमन्नं। अहमन्नं। अहम-

॥ ३२० ॥ पृथिवांज्योतिष्मतीᳲ मतीदूयावापृथिव्यौ.
॥ ३२१ ॥ दिशोनुष्टुब्विश्वेदेवा.

॥ ३२० ॥ अगन्यास्समां.
॥ ३२१ ॥ उपाकर्ममां. (नैषेद्यन्)

न्नं । अहमन्नादो । हमन्नादो । हमन्नादो । हंविधारयो । हंविधारयो । हंविधारयः । हाउहाउहाउवा । ए । अहमन्नमहमन्नादोहंविधारयः । ए । अहमन्नमहमन्नादोहंविधारयः । ए । अहमन्नमहमन्नादोहं विधारयः । ए । अह६ सुवर्ज्योतीः२३४५ः ॥ १ ॥ १ ॥ ॥३३२॥ हाउ । हाउ । हाउ । म नोजयित् । मनोजयित् । मनोजयित् । हृदयमजयित् । हृदयमजयित् । हृदयमजयित् । इंद्रोजयित् इंद्रोजयित् । इंद्रोजयित् । अहमजेपं । अहमजेपं । अहमजेपं । हाउ । हाउ । हाउ । यद्वर्चोहिरण्य । स्या । यद्वावर्चोगवामु । ता । सत्यस्यब्रह्मणोव । चाः । तेनमासह्‌सृजाम । सावि । हाउ । हाउ । हा उ । मनोजयित् । मनोजयित् । मनोजयित् । हृदयमजयित् । हृदयमजयित् । हृदयमजयित् । इंद्रो जयित् । इंद्रोजयित् । इंद्रोजयित् । अहमजेपं । अहमजेपं । अहमजेपं । हाउहाउहाउवा । ए । म- नोजयिद्धृदयमजयिदिंद्रोजयिदहमजेपं । ए । मनोजयिद्धृदयमजयिदिंद्रोजयिदहमजेपं । ए । मनो जयिद्धृदयमजयिदिंद्रोजयिदहमजेपं । ए । अह६ सुवर्ज्योतीः२३४५ः ॥ ६ ॥ २ ॥ ॥३३३॥ हाउ । ३

॥ ३३२ ॥ त्रिणोनुष्टुब्विष्टुदेवा: ॥ ३३२ ॥ /अनुन्नासमो. / पूर्णोत्सर्गन्यासमो.
॥ ३३३ ॥ त्रिणोनुष्टुब्विश्वेदेवा: ॥ ३३३ ॥ /अगन्यासमो.

।प्रथे।प्रथे।प्रथे।प्रत्यष्ठां।प्रत्यष्ठां।प्रत्यष्ठां।हाउ।३।यद्वर्चोहिरण्य।स्या।यद्वायर्चोगवामु।ता।स
त्यस्यब्रह्मणोव।चाः।तेनमासꣳसृजाम।सायि।हाउ।३।प्रथे।प्रथे।प्रथे।प्रत्यष्ठां।प्रत्यष्ठां।प्र-
त्यष्ठां।हाउहाउहाउ।वा।ए।प्रथेप्रत्यष्ठां।ए।प्रथेप्रत्यष्ठां।ए।प्रथप्रत्यष्ठां।ए।अहꣳसुवर्ज्योती२
३१११:॥ १०॥ ३॥ ॥२३४॥ हाउ।हाउ।हाउ।फाल्फल्फल्फल्फल्फल्।फाल्फल्फ-
ल्फल्फल्फल्।फाल्फल्फल्फल्फल्फल्।हाउ।हाउ।हाउ।इंद्रन्नरोनेमधितहवा२न्तायि।यत्पार्या
युनजतेधिया२स्ताः।शूरोनृपाताश्रवसश्चका२मायि।आगोमतिव्रजेभजातुवा२न्नाः।हाउ।हाउ।
हाउ।फाल्फल्फल्फल्फल्फल्।फाल्फल्फल्फल्फल्फल्।फाल्फल्फल्फल्फल्फल्।हाउहाउहाउ।वा।मनः
सुवरिडा२३१११॥ ११॥ ४॥ ॥२३५॥ हाउ।३।इमाः।इमाः।इमाः।प्रजाः।प्रजाः।प्रजाः
प्रजापते।होयि।प्रजापते।होयि।प्रजापते।हा३१उ।वा२।ए।हृदयं।ए।हृदयं।ए।हृदया

॥ २३४ ॥ कश्यपस्त्रिष्टुबिंद्र. | ॥ २३४ ॥ उपाकर्मसमा. (पुंगोफलम्)
॥ २३५ ॥ प्रजापतिः कश्यपोऽनुष्टुम्यजुर्याप्रजापति | ॥ २३५ ॥ अगस्त्यसमा.

३१उ । वा२ । प्रजारूपमजीजने३ । इट्इडा२३१११ ॥ १५ ॥ ५ ॥ ॥ ३३६ ॥ हाउ । हा-
उ । हाउ । तेमन्वतप्रथमंनाममगो । नाम् । नाम् । नाम् । हाउ । हाउ । हाउ । त्रिःसप्तपरमंनाममजा ।
नान् । नान् । नान् । हाउ । हाउ । हाउ । ताजानतीरभ्यनूपता । क्षाः । क्षाः । क्षाः । हाउ । हाउ । हा
उ । आविर्भुवन्नरुणार्यिशसागा । वाः । वाः । वाः । हाउहाउहाउ । वा । ए । दुघाः । ए । दुघाः । ए । दु
घा२३१११ः ॥ १८ ॥ ॥ ६ ॥ ॥ ३३७ ॥ हाउहाउहाउवा । सहर्षभाःसहवत्साउदेत । हा
उहाउहाउवा । विश्वारूपाणिबिभ्रतीद्व्यूध्नीः । हाउहाउहाउवा । उरुःपृथुरयंवोअस्तुलोकः । हाउहा
उहाउवा । इमाआपःसुप्रपाणाइहस्त । हाउहाउहाउवा । अश्वामिष्टये३हस् ॥ १९ ॥ ७ ॥ ॥
॥ इतिश्री मंत्रसंहितायामारण्यगाने पंचमः प्रपाठकः ॥ ५ ॥ ॥ अथ षष्ठः प्रपाठकः
प्रारंभः ॥ ॥ ३३८ ॥ हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । अग्निमू-

| | |
|---|---|
| ॥ ३३६ ॥ गावस्त्रिष्टुविंद्र | ॥ ३३६ ॥/वृषोत्सर्गन्यासमा |
| ॥ ३३७ ॥ गावस्त्रिष्टुविंद्र | ॥ ३३७ ॥/वृषोत्सर्गन्यासमा. |
| ॥ ३३८ ॥ अग्निर्गाय पङ्क्ति | ॥ ३३८ ॥/रुद्रौमा |

ह्वांदि३वाःका१क२तू। पतिःपृथीवि३याआ१या२म्। अपा६रेता६ सि३जायिन्वा१ती२३। हाउ।
हाउ। हाउ। भ्राजाओवा। भ्राजाआवा। भ्राजा३आ५वा५६५। ए। विश्वस्यजगताज्योती२३११
१ः॥ १॥ १॥ ॥ ३३९ ॥ भ्राजा। भ्राजा। भ्राजा३१उ। वा२। अयारुचाहरिण्यापुनानः
। विश्वाद्वेषा६ सितरतिसयुग्वभिः। सुरानसयुग्वभिः। धाराप्टष्ठस्यरोचते। पुनानोअरुषोहरिः। वि
श्वापद्रूपापरिघास्पृक्काभिः। सप्तास्येभिर्ऋक्कभिः। भ्राजा। भ्राजा। भ्राजा३१उ। वा२। ए। विश्वस्मै
जगतज्योतिः। ज्यो२ता२३४औहोवा। इट्इडा२३१११ ॥ २ ॥ २ ॥ ॥ ३४० ॥ हाउ। हा
उ। हाउ। औहा। औहा। औहायि। वयोहोयि। वयो०। वयो०। पयोहोयि। पयो०। पयो०। चक्षु
र्होयि। चक्षु०। चक्षु०। श्रोत्र६होयि। श्रोत्र६०। श्रोत्र६०। आयुर्होयि। आयु०। आयु०। त
पोहोयि। तपो०। तपो०। वर्चोहायि। वर्चो०। वर्चो०। तेजोहोयि। तेजो०। तेजो०। सुवर्होयि
। सुव०। सुव०। ज्योतिर्होयि। ज्योति०। ज्योति०। भ्रक्षस्यवृष्णोअरुषस्यनूमा२३हाः। प्रनोवचो

॥ ३३९ ॥ याचुरत्याए सूर्य. ॥ ३३९ ॥ यद्दोमा.
॥ ३४० ॥ वैश्वानरजगताचैश्वानर. ॥ ३४० ॥ भासोदित.

विदर्धाजातवेदा२३सायि । वैश्वानरायमतिर्न्व्यसेशू२३र्चीः । सोमइवपवतेचारश्मा२३या३यि । हाउ । हाउ । हाउ । ओहा । ओहा । ओहायि । वयोहोयि । वयो० । वयो० । पयोहोयि । पयो० । पयो० । चक्षुहोयि । चक्षु० । चक्षु० । श्रोत्र६ होयि । श्रोत्र६ ० । श्रोत्र६ ० । आयुहोयि । आय० । आयु० । तपोहोयि । तपो० । तपो० । वर्चोहोयि । वर्चो० । वर्चो० । तेजोहोयि । तेजो० । तेजो० । सुवहोयि । सुव० । सुव० । ज्योतिर्होयि । ज्योतिर्होयि । ज्योतिर्हो२ । वा२३४ओहोवा । ए । अग्निः समुद्रमाक्षयत् । ए । अग्निर्मूर्द्धाभिवादिवः । ए । आयुर्द्धाश्स्मभ्यंवर्चोधादेवेभ्या२३११ः ॥ ३ ॥ ३ ॥

॥ ॥१५५॥ ॥ ३४१ ॥ ओ३१म् । ओ३१म् । ओ३१म् । आयुः । आयुः । आयुः । ज्योतिः । ज्योतिः । ज्योतिः । ज्योतावा । ज्योतावा । ज्योतावा । ज्योतावाहायि । ज्योतावा० । ज्योतावा३हाउ । वा । इह- स्वर्वैश्वानरायप्रदिशोज्योतिर्बृहत् । इंदुरिडासत्यं । सत्यं । सत्यं । सत्यावा । सत्यावा । सत्यावा । सत्यावाहायि । सत्यावाहायि । सत्यावा३हाउ । वा । इहस्वर्वैश्वानरायप्रदिशोज्योतिर्बृहत् । कायमा

॥ ३४१ ॥ वैश्वानरोगृहतीवैश्वानरः । ॥ ३४१ ॥ वसोर्द्धारामो. ( घीनी धारा करवाल. )

नोवनातुवाम् । तुवाम् । तुवाम् । तुवोवा । तुवोवा । तुवोवा । तुवोवाहायि । तुवोवा० । तुवोवा३हा-
उ । वा । इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । याभूतंपृथिवी । पृथिवी । पृथिवी । पृथिव्योवा । पृथि
व्योवा । पृथिव्योवा । पृथिव्योवाहायि । पृथिव्योवा० । पृथिव्योवा३हाउ । वा । इहस्ववैश्वानरायप्र
दिशोज्योतिर्बृहत् । यन्मातृरजगन्नपाः । अपाः । अपाः । अपोवा । अपोवा । अपोवा । अपोवाहायि
अपोवा० । अपोवा३हाउ । वा । इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । सहस्तेजआपः । आपः । आ
पः । आपोवा । आपोवा । आपोवा । आपोवाहायि । आपोवा० । आपोवा३हाउ । वा । इहस्ववै-
श्वानरायप्रदिशोज्योतिर्बृहत् । नतत्तअग्नेप्रमृषेनिवर्त्तनाम् । तनाम् । तनाम् । तनोवा । तनोवा । त
नोवा । तनोवाहायि । तनोवा० । तनोवा३हाउ । वा । इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । उपादिशो
ज्योतिः । ज्योतिः । ज्योतिः । ज्योतोवा । ज्योतोवा । ज्योतोवा । ज्योतोवाहायि । ज्योतोवा० । ज्यो
तोवा३हाउ । वा । इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । यद्दूरेसन्निहाभुवाः । भुवाः । भुवाः । भुवोवा
। भुवोवा । भुवोवा । भुवोवाहायि । भुवोवा० । भुवोवा३हाउ । वा । इहस्ववैश्वानरायप्रदिशोज्योति

द्वृहत् । ओ३१म् । ओ३१म् । ओ३१म् । आयुः । आयुः । आयुः । ज्योतिः । ज्योतिः । ज्योतिः । ज्योतीवा । ज्योतीवा । ज्योतीवा । ज्योतीवाहायि । ज्योतीवा० । ज्योतीवा३हाउ । वा । घर्मोमरुद्भिर्भुवनेषुचक्रदत् । इट्इडा२३१११ ॥ ४ ॥ ४ ॥

॥ ३४२ ॥ भ्राजा । भ्राजा । भ्राजा३१उ । वा२ । अग्नआयूꣳषि पवसे । आसुवोर्जमिषंचनः । आरवाधस्वदुच्छुनां । भ्राजा । भ्राजा । भ्राजा३१उ । वा२ । ए । भ्राज । ए । भ्राज । ए । भ्राज ॥ ५ ॥ ५ ॥

॥ ३४३ ॥ आ । भ्राज । आ । भ्राज । आ । भ्राज । अग्निमूर्द्धादिवः३ककु१त्पतिः । पृथिवी३या अ१या२म् । अपाꣳ रेताꣳसी३जिन्वा१ती२ । आ । भ्राज । आ । भ्राज । आ । भ्राजा३उवा । ए । आभ्राज । ए । आभ्राज । ए । आभ्राज ॥ ६ ॥ ६ ॥

॥ ३४४ ॥ हाहाउ । हाहाउ । हाहाउ । इडा । इडा । इडा । हस् । हस् । हस् । ऋतंमे । ऋतंमे । ऋतंमे । विभ्राड्बृहत्पिबतुसोमिया२म्मधु२ । आयुर्दधद्यज्ञपतावविह्रुता२म् । वा

| | |
|---|---|
| ॥ ३४२ ॥ सूर्यागायत्र्यग्नि | ॥ ३४८ ॥ पवमान्यासमा यद्रीमा |
| ॥ ३४३ ॥ सूर्यागायत्र्यग्नि | ॥ ३४३ ॥ रत्नामा |
| ॥ ३४४ ॥ विभ्राडनुष्टुब्यिद्व घा वायुर्जगतीवैश्वानर | ॥ ३४४ ॥ भासाविभा. |

तनूतायोअभिरक्षता२यित्माना२। प्रजाःपिपर्तिवहुधाविश२जाती२। हाहाउ। हाहाउ। हाहाउ। इ
डा। इडा। इडा। हस्। हस्। हस्। ऋतंमे। ऋतंमे। ऋतंमे। औहोवाहाउ। वा। फा२श्। ऋतंमे। ऋ
तंमे। ऋतंमे। औहोवाहाउ। वा। फा२ट्। ऋतंमे। ऋतंमे। ऋतंमे। औहोवाहाउ। वा। भ्रा२ट्
॥ ७ ॥ ७ ॥ ॥ १४५ ॥ हाउ। हाउ। हाउ। ओहा। ओहा। ओहायि। इहोहो। इहोहो। इ
होहो। इहियो। इहियो। इहियो। हुम्। हुम्। हुम्। हो। हो। हो। हंङ्। हंङ्। हंङ्। इडा। इडा
इडा। ऋतंमे। ऋतंमे। ऋतंमे। हस्। हस्। हस्। प्रक्षस्यवृष्णोअरुपस्यनूमा२३हाः। प्रनोवचोवि
दथाजातवेदा२३सायि। वैश्वानरायमतिर्नव्यसेशू२३र्चीः। सोमइवपवतेचारुरग्ना२३या३यि। हा
उ। हाउ। हाउ। ओहा। ओहा। ओहायि। इहोहो। इहोहो। इहोहो। इहियो। इहियो। इहियो
हुम्। हुम्। हुम्। हो। हो। हो। हंङ्। हंङ्। हंङ्। इडा। इडा। इडा। ऋतंमे। ऋतंमे। ऋतंमे। हस्
। हस्। हा२३४। औहोवा। इहोहो। भद्रं। इहोहो। श्रेयः। इहोहो। वामं। इहोहो। वरं। इहोहो। सु

वं। इहोहा। अस्ति। इहाहो। अभ्राजीत्। इहोहो। ज्योतिः। अभ्राजीत्। इहोहो। दीदिवः। ए२३
। हियाहाउवा३। भा२३१११स् ॥ ८ ॥ ८ ॥ ॥१००॥ ॥ ३४६ ॥ हाउ। हाउ। हाउ। आयुः। आ-
युः। आयुः। ज्योतिः। ज्योतिः। ज्योता३४। औहोवा। ए३। वाग्ज्योती२३१११ः ॥ ९ ॥ ९ ॥
॥ ॥१०१॥ ॥ ३४७ ॥ एवाहियेवा२३४औहोवा। हव्हव्हाव्हव्हव् २३४औहोवा। एवाहियेवा२
३४औहोवा। हव्हव्हाव्हव्हव् २३४औहोवा। एवाहियेवा२३४औहोवा। हव्-हव्हाव्हव्ह
व्-२३४औहोवा। हियेवा। हियग्नायि। हिइंद्रा। हिपूषान्। हिदेवा२३१११ः ॥ १० ॥ १० ॥
॥ ॥१०२॥ ॥ ३४८ ॥ वयोमनोवयःप्राणाः। वयश्चक्षुर्वयःश्रोत्राम्। वयोघोषोवयोन्नालाम्। वयो२३भू
ताउ। वा३। ई२३१११ ॥ ११ ॥ ११ ॥ ॥१०३॥ ॥ ३४९ ॥ वयोमना२३ः। होयि। होवाओ२३
४वा। वयःप्राणा२३ः। होयि। होवाओ२३४वा। वयश्चक्षू२३ः। होयि। होवाओ२३४या। वयः

॥ ३४६ ॥ इंद्रोनुष्टुबिंद्र धा वायुर्जगतीवैश्वानर. ॥ ३४६ ॥ भासादिमां.
॥ ३४७ ॥ सदर. वायुर्जगतीवैश्वानर. ॥ ३४७ ॥ भासादिमां.
॥ ३४८ ॥ सदर. वायुर्जगतीवैश्वानर. ॥ ३४८ ॥ भासादिमां.
॥ ३४९ ॥ सदर. वायुर्जगतीवैश्वानर. ॥ ३४९ ॥ भासादिमां.

औता२३म् । हाँयि । हौवाओ२३४वा । वयोधापा२३ः । हौयि । हौवाओ२३४वा । वयोत्रता२३म्
। हौयि । हौवाओ२३४वा । वयोभूता२३म् । हौयि । हौवाओ२३४५वा६५६ । ऊ२३४५६ ॥ ॥
॥ १२ ॥ १२ ॥ ७ ॥ ७ ॥ ७ ॥ ॥ ३५० ॥ ऊऽऽ२र्कं । हाउ । हाउ । हाउ । हा३वाक् । ३ ।
। धर्मो२धर्मः । धर्मो२धर्मः । धर्मो२धर्मः ॥ १३ ॥ १३ ॥ ॥ ३५१ ॥ धर्मविधर्म । धर्मविध
र्म । धर्मविधर्म । सत्यगाय । सत्यगाय । सत्यगाय । ऋतंवद । ऋतंवद । ऋतंवद । हू६ वंव२वंव२वं
। हू६ वंव२वंव२वं । हू६ वंव२वंव२वं ॥ १४ ॥ १४ ॥ ॥ ३५२ ॥ ओहाहोवाहोयि । ओहा
होवाहोयि । ओहाहोवाहा३१उ । वा२३ । भू२३४वात् । विभ्राड्बृहत्पिबतुसोम्यं‍म । ध्वोहोहा-
वाहोयि । ओहाहोवाहोयि । ओहाहोवाहा३१उ । वा२३ । जा२३४नात् । आयुर्दधद्य-
ज्ञपतावविह्रुतं । ओहाहोवाहोयि । ओहाहोवाहोयि । ओहाहोवाहा३१उ । वा२३ । वा२३४

| | |
|---|---|
| ॥ ३५० ॥ इन्द्रानुष्टुब्विद्र या वायुर्जगतीवैश्वानर. | ॥ ३५० ॥ भासादिमा. |
| ॥ ३५१ ॥ उपरप्रमाणे | ॥ ३५१ ॥ भासादिमा. |
| ॥ ३५२ ॥ उपरप्रमाणे | ॥ ३५२ ॥ भासादिमा. |

द्वांत् । वातजूतोयोअभिरक्षतित्मना । ओहोहोवाहोथि । ओहोहोवाहोयि । ओहोहोवाहा२१उ ।
वा२३ । का२३४रात् । प्रजाःपिपर्त्तिबहुधाविराजति । ओहाहावाहोयि । ओहोहावाहोयि । ओहा हा
वाहा३१उ । वा२ । ए । अभ्राजीज्ज्योतिरभ्राजा२३१११त् ॥ १५ ॥ १५ ॥ ॥१०७॥ ॥ ३५३ ॥ भू-
मिः । भूमिः । भूमिः । अंतरिक्ष । अंतरिक्षं । अंतरिक्षं । द्यौः । द्यौः । द्या२३४ । ओहोवा । ए२ । भू
ताया२३१११ ॥ १६ ॥ १६ ॥ ॥१०८॥ ॥ ३५४ ॥ द्यौः । द्यौः । द्यौः । अंतरिक्षं । अंतरिक्षं । अंतरिक्षं । भू
मि । भूमिः । भूमा३४ । ओहोवा । ए३ । आयुप२३१११ ॥ १७ ॥ १७ ॥ ॥१०९॥ ॥ ३५५ ॥ हाउ ।
हाउ । हाउ । ज्योतिः । ज्योतिः । ज्योता३४ । ओहोवा । इ२३१११ ॥ १८ ॥ १८ ॥ ॥
॥११०॥ ॥ ३५६ ॥ संत्वाभूतान्यैरयन् । होयि । संत्वाभव्यान्यैरयन् । होयि । संत्वाभविष्यदैरयत् । होयि । सं-
त्वाभुवनमैरयत् । होयि । संत्वाभूतमैरयत् । होयि ॥ १९ ॥ १९ ॥ ॥ इतिश्री मंत्रसंहि

| | |
|---|---|
| ॥ ३५३ ॥ इंद्रोनुष्टुबद्ध वा वायुर्जगतीवैश्वानर | ॥ ३५३ ॥ भासादिमा |
| ॥ ३५४ ॥ उपरप्रमाण | ॥ ३५४ ॥ भासादिमा |
| ॥ ३५५ ॥ उपरप्रमाण | ॥ ३५५ ॥ भासादिमा |
| ॥ ३५६ ॥ विदनेदेवात्रिष्टुबादित्य | ॥ ३५६ ॥ भासादिमा. |

तायामारण्यगाने षष्ठस्यार्द्धः प्रपाठकः ॥ ॥ २५७ ॥ ॐ उवी२उवि । उविहो२उवि ॥ उवी२उवि । उविहो२उवि ॥ उवी२उवि । उविहो२उवि ॥ इती२इति । इतिहो२इति ॥ इती२इति । इतिहो२इति ॥ इती२इति । इतिहो२इति ॥ असी२असि । असिहो२असि ॥ असी२असि । असिहो२असि ॥ असी२असि । असिहो२असि ॥ अरुरुचोदिवंपृथिवीं । असी२असि । असिहो२असि । अरुरुचोदिवंपृथिवीं । असी२असि । असिहो२असि । अरुरुचोदिवंपृथिवीं । असी२असि । असिहो२असि । पतिर । स्यपामोपधीना३म् । ओयि । पतायिरा२३४सी । पतिर । स्यपामोपधीना३म् । ओयि । पतायिरा२३४सा । पतिर । स्यपामोपधीना३म् । ओयि । पतायिरा२३४सी । चायि । त्रदेवानामुदगादनीकं । वायिश्वेपांदेवाना६ समिदजस्रंज्योतिराततता३म् । होयि । वायिश्वेपांदेवाना६ समिदजस्रंज्योतिराततता३म् । होयि । वायिश्वेपांदेवाना६ समिदजस्रंज्योतिराततता३म् । होयि । आयुर्यन् । आयुर्यन् । आयुयन् । अवः । अवः । अवः । चक्षुर्मित्रस्यवरुणस्याग्नेः । सुवःसद् सर्पस६

॥ २५७ ॥ आयाचिवृदशनामेतध्यराति ॥ आदित्यस्त्रिष्टुप्गव। यकासूर्य ॥ उत्तरयोरादित्योगायत्रीसूर्ये | ॥ २५७ ॥ भासादिमा.

सार्पो । सुवःसह सर्पसह सार्पो । सुवःसह सर्पसह सार्पो । जनावनह सुवा२ःसुवः । जना२वना२म्
। सुवा२ःसुवः । जनावनह सुवा२ःसुवः । जना२वना२म् । सुवा२ःसुवः । जनावनह स्वा२.सुवः
। जना२वना२म् । सुवा२ःसुवः । आप्राद्यावापृथिवीआन्तरी२३क्षा३म् । सृपिप्रसृर्पाऐही । सृपिप्रसृ
र्पाऐही । सृपिप्रसृर्पाऐही । अस्तोपलस्वभानवाऐही । विप्रानाविघ्रयामताऐही । ग्रावाणोवर्हिंषिप्रि
याऐही । इंद्रस्यरह हियंवृहादेही । इंद्रा२ । स्यरा२ । हिया२म् । वृहदिंद्रस्यरह हियंवृहादेही । इंद्रा-
२ । स्यरा२ । हिया२म् । वृहदिंद्रस्यरह हियंवृहादेही । इंद्रा२ । स्यरा२ । हिया२म् । वृहदिंद्रस्यरह-
हियंवृहादेही । सूर्यआत्माजगतस्तास्थुषा२३श्चा३ । अंतश्चरतिरोचनाऐही । अंतश्चरतिरोचनाऐही
। अंतश्चरतिरोचनाऐही । अस्यप्राणादपानताऐही । अस्यप्राणादपानताऐही । अस्यप्राणादपानता
ऐही । व्यख्यन्महिषोदिवामेही । व्यख्यन्महिषोदिवामेही । व्यख्यन्महिषोदिवामेही । प्राएतिप्राएति ।
प्राएतिप्राएति । प्राएतिप्राएति । प्राएति । प्राएति । प्रा२३ । एता२३४ । औहोवा । ए३ । देवादि
वाज्योती२३११११: ॥ १ ॥ १ ॥ ॥ ३५८ ॥ उवी२ । उवा२ । उवी२ । हिगी२ । हिगी२ ।

॥ ३५८ ॥ प्रथमउत्तरयोपादित्येगायत्रीसूर्य | ॥ ३५८ ॥ भासादिमा

हिंगी२ । हिंगिगि । हिगिगि । हिगिगि । आयंगौःपृश्निरक्रमीदेही । आयंगाःपृश्निरक्रमीदेही । आयं-
गाःपृश्निरक्रमीदेही । असदन्मातरंपुराऐही । असदन्मातरंपुराऐहा । असदन्मातरंपुराऐही । ।पितरं
चप्रयंत्स्वाऐही । पितरंचप्रयंत्स्वाऐही। पितरंचप्रयंत्स्वाऐही । उर्वी२ । उर्वी२ । उर्वी२ । हिंगी२ । हिं
गी२ । हिंगी२ । हिगिगि। हिगिगि। हिगिगि ॥ २ ॥ २ ॥ ॥ ३५९ ॥ उर्वी । उर्वी । उर्वी । हिंगी ।
हिंगी । हिंगी । हिगिगि । हिगिगि । हिगिगि ।आयंगौःपृश्निरक्रमीदेही । असदन्मातरंपुराऐही । पितरंच
प्रयंत्स्वाऐही । उर्वी । उर्वी । उर्वी । हिंगी । हिंगी । हिंगी । हिगिगि । हिगिगि । हिगिगि ॥ ३ ॥ ३ ॥
॥ ३६० ॥ हाउ । २ । हाउ । भ्राजाओवा । भ्राजा० । भ्राजा० । उदुत्यंजा । उदु० । उदु० । चित्रंदेवाना
मुद्गादनी२३का३म् । हाउ । २ । हाउ । भ्राजाओवा । भ्राजा० । भ्राजा० । तवेदसं । तवे० । तवे० ।
चक्षुर्मित्रस्यवरुणस्यआ२३भ्रा३यिः । हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा
। देवंवहा । देवंवहा । देवंवहा । आप्राद्यावापृथिवीआन्तरी२३क्षा३म् । हाउ । हाउ । हाउ । भ्राजा

॥ ३५९ ॥ प्रथमउत्तरयोरादित्योगायत्रीसूर्यः
॥ ३६० ॥ सूर्यस्त्रिष्टुब्गायत्रीसूर्यः

॥ ३५९ ॥ भासादिमां.
॥ ३६० ॥ भासादिमां.

ञावा । भ्राजाओवा । भ्राजाओवा । निर्केतवः । तिर्केतव- । तिर्केतदः । सूर्यआत्माजगतस्तास्थुषा
२३श्रा३ । हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । दृशेविश्वा । दृशेविश्वा । दृ
शेविश्वा । सूर्यआत्माजगतस्तास्थुषा२३श्रा३ । हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्रा
जाओवा । यमूर्ये । यंतूर्ये । यसू२३रियाउ । वा३ । ए३ । देवाद्विवाज्योती२३१११: ॥ ४ ॥ ४ ॥
॥ ॥ ३६१ ॥ हाउ । हाउ । हाउ । सहोभ्राज । सहोभ्राज । सहोभ्राजा । पोभ्राजा । पोभ्राजा
। पोभ्राज । अभ्राजीत् । अभ्राजीत् । अभ्राजीत् । व्यभ्राजीत् । व्यभ्राजीत् । व्यभ्राजीत् । अदिद्युत
त् । अदिद्युतत् । अदिद्युतत् । अदिद्युतद्विश्वभृत्त५सहोद्र२हात् । अदिद्युतदभ्राड्भ्रा२भ्राट् । अदि-
द्युतद्वर्माञ्ज२चात् । अदिद्युतद्वर्मउपलोअरोचा२या' । हाउ । हाउ । हाउ । सहोभ्राज । स हो
भ्राज । सहोभ्राजा । पोभ्राजा । पोभ्राजा । पोभ्राज । अभ्राजीत् । अभ्राजीत् । अभ्राजीत् । व्यभ्राजी
त् । व्यभ्राजीत् । व्यभ्राजीत् । अदिद्युतत् । अदिद्युतत् । अदिद्युता२त् । हाउवा । ए । अदिद्युतद्वय

॥ ३६१ ॥ इन्द्रानुष्टुप्साम ॥ ३६२ ॥ आसादिमा

मोंअरूरुचदुपसांदिविसूर्योंविभार्ता२३४५ः ॥ ५ ॥ ५ ॥ ७ ॥ ॥ ३६२ ॥ औहोऔहोवा ।
होयि । औहोऔहोवा । होयि । औहोऔहोवा । हा३१उ । वा२३ । भू२३४वात् । अंतश्चरतिरोच
ना । औहोऔहोवा । होयि । औहोऔहोवा । होयि । औहोऔहोवा । हा३१उ । वा२३ । जा२३४
नात् । अस्यप्राणादपानती । औहोऔहोवा । होयि । औहोऔहोवा । होयि । औहोऔहोवा । हा३
१उ । वा२३ । वा२३४ह्रांत् । व्यख्यन्महिषोदिवं । औहोऔहोवा । होयि । औहोऔहोवा । होयि
। औहोऔहोवा । हा३१उ । वा२३ । का२३४रात् । औहोऔहोवा । होयि । औहोऔहोवा । होयि
। औहोऔहोवा । हा३१उ । वा२३ । भू२३४तीः । औहोऔहोवा । होयि । औहोऔहोवा । होयि ।
औहोऔहोवा । हा३१उ । वा२ । अभ्राज्जीज्ज्योतिरभ्राजात् । औहोऔहोवा । होयि । औहोऔहो
वा । होयि । औहोऔहोवा । हा३१उ । वा२३ । ए३ । सर्वान्कामानशीमहा२३५११ ॥ ६ ॥ ६ ॥
॥ ॥ ३६३ ॥ हाउहाउहाउवा । इंदूः । भ्राजाआवा । भ्राजाआवा । भ्राजाआवा । आयंगौः ए

॥ ३६१ ॥ मरुतोगायर्त्रासूर्यः
॥ ३६३ ॥ प्रजापतिर्गायत्रीसूर्यः

॥ ३६२ ॥ मासाविमां.
॥ ३६३ ॥ मासाविमां.

निरकर्मीदेही । हाउहाउहाउवा । ईडा । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । असदन्मातरं
पुराऐही । हाउहाउहाउवा । सात्य । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । पितरंचप्रयंत्स्वाऐ
ही । हाउहाउहाउवा । दीर्घाः ॥ ७ ॥ ७ ॥ ॥११९०॥ ॥ ३६४ ॥ हाउ३ वा । भूत । भ्राजाओवा । भ्रा-
जाओवा । भ्राजाओवा । अंतश्चरतिरोचनाऐही । हाउहाउहाउवा । पृथिवी । भ्राजाओवा । भ्राजा
ओवा । भ्राजाओवा । अस्यप्राणादपानताऐही । हाउहाउहाउवा । साहः । भ्राजाओवा । भ्राजाओ
वा । भ्राजाओवा । व्यख्यन्माहिषोदिवामैही । हाउहाउहाउवा । तेज॰ ॥ ८ ॥ ८ ॥ ॥१११॥ ॥ ३६५ ॥ हा
उहाउहाउवा । आप॰ । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । त्रिꣳशद्धामविराजताऐही । हा
उहाउहाउवा । ऊषा । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । वाक्पतंगायधीयताऐही । हाउ-
हाउहाउवा । दीक्ष॰ । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । प्रतिवस्तोरहद्युभाऐही । हाउहा-

| | |
|---|---|
| ॥ ३६४ ॥ प्रजापतिगायत्रास्यं | ॥ ३६४ ॥ भासादिमा |
| ॥ ३६५ ॥ प्रजापतिगायत्रास्यं | ॥ ३६५ ॥ भासादिमा |

उहाउवा । ज्योतिः ॥ ९ ॥ ९ ॥ ॥१२०॥ ॥ ३६६ ॥ उद्यंलोकानरोचयः । होयि । इमांलोकानरोचयः
। होयि । प्रजाभूतमरोचयः । होयि । विश्वंभूतमरोचयः । हो२ । हा२३४औहोवा । धर्म्मोज्योती२
३१११: ॥ १० ॥ १० ॥ ॥१२१॥ ॥ ३६७ ॥ हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्रा-
जाओवा । दिदीहिविश्वतस्पृथुः । उदुत्यंजात३वायिदा१सा२म् । देवंवहंति३कायिता१वा२ः । दृशे
विश्वाय३सूरा१या२म् । अपत्येताय३वाया१था२ । नक्षत्रायंति३याक्तू१भा२चिः । सूरायविश्व३चा
क्षा१सा२यि । अदृश्रन्नस्य३कायिता१वा२ः । विरश्मयोज३नाँ आ१नू२ । भ्राजंतोअग्न३योया१
था२३ । हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्राजा३ओ५वा६५६ । ई२३१११ ॥
॥ ११ ॥ ११ ॥ ॥१२२॥ ॥ ३६८ ॥ हाउ । हाउ । हाउ । शुक्राओवा । शुक्राओवा । शुक्राओवा । दि
दीहिविश्वतस्पृथुः । उदुत्यंजात३वायिदा१सा२म् । देवंवहंति३कायिता१वा२ः । दृशेविश्वाय३सू

॥ ३६६ ॥ इन्द्रोत्रिष्टुप्सूर्यः. ॥ ३६६ ॥ आसादिमां. उपाकर्मणां. ( आरार्तिकम्. )
॥ ३६७ ॥ परिधीनामिंद्रोगायत्रीसूर्यः. ॥ ३६७ ॥ आसादिमां.
॥ ३६८ ॥ परिधीनामिंद्रोगायत्रीसूर्यः ॥ ३६८ ॥ आसादिमां.

रा१या२म् । अपत्येताय३वाया१था२ । नक्षत्रायंति३याक्तू१भा२थिः । सूरायविश्व३चाक्षा१सा२
थि । अदृश्रन्नस्य३कायिता१वा२ः । विरश्मयोज३ना६ आ१नू२ । भ्राजंतोअग्न३योया१था२३। हा
उ । हाउ । हाउ । शुक्राओवा । शुक्राओवा । शुक्रा३ओ५वा६५६ । ई२३१११ ॥ १२ ॥ १२ ॥
॥ ॥ ३६९ ॥ हाउ । हाउ । हाउ । भूताओवा । भूताओवा । भूताओवा । दिदीहिविश्वतस्पृथुः
। तरणिर्विश्व३दार्शा१ता२ः । ज्योतिष्कृदसी३सूरा१या२ । विश्वमाभासी३रोचा१ना२म् । प्रत्यङ्-
देवा३नांवा१यिशा२ः । प्रत्युङुदेपी३मानू१पा२न् । प्रत्याङ्विश्वं६ सु३वार्ह१शा२थि । येनापावक३चा
क्षा१सा२ । भुरण्यंतंज३ना६ आनू२ । त्वंवरुण३पा२या१सा२३थि । हाउ । हाउ । हाउ । भूताओवा
। भूताओवा । भूता३ओ५वा६५६ । ई२३१११ ॥ १२ ॥ १३ ॥　　॥ ३७० ॥ हाउ । हाउ ।
हाउ । तेजाओवा । तेजाओवा । तेजाओवा । दिदीहिविश्वतस्पृथुः । तरणिर्विश्व३दार्शा१ता२ः । ज्यो
तिष्कृदसी३सूरा१या२ । विश्वमाभासी३रोचा१ना२म् । प्रत्यङ्देवा३नांवा१यिशा२ः । प्रत्युङुदेपी

॥ ३६९ ॥ पदिधानामग्नागायत्रासूर्य
॥ ३७० ॥ पदिधानामग्नोगायत्रासूर्य

॥ ३६९ ॥ भासादिमा
॥ ३७० ॥ भासादिमा

३मानू१रा२न् । प्रत्यङ्विश्व६ सु२वार्ह१शा२यि । येनापावक२चाक्षा१सा२ । भुरण्यंतंज२ना६ आ
१नू२ । त्ववर ग२पाश्या१सा२२यि । हाउ । हाउ । हाउ । तजाआवा । तजाआवा । तजा२आ५
वा६५६ । ई२३१११ ॥ १४ ॥ १४ ॥ ॥ ३७१ ॥ हाउ । हाउ । हाउ । सत्याआवा । सत्या
आवा । सत्याआवा । दिद्योहिविश्वतस्पृथुः । उद्यामेपिर२जाःपा१र्थू२ । अहामिमानो२आकु१भा
२यिः । पश्यंजन्मानि२सूरा१या२ । अयुक्तसप्त२शुंध्यू१वा२ः । सूरोरथस्य२नाप्त्रा१या२ः । ताभि-
र्यातिस्व२युक्ता१यिर्भा२ः । सप्तत्वाहरि२तोरा१था२यि । वहंतिदेव२सूरा१या२ । शोचिष्केशंवि२-
चाक्षा१णा२३ । हाउ । हाउ । हाउ । सत्याओवा । सत्याओवा । सत्या२ओ५वा६५६ । ई२३४५
॥ १५ ॥ १५ ॥ ॥ ३७२ ॥ हाउ । हाउ । हाउ । ऋताओवा । ऋताओवा । ऋताओवा । दि
द्योहिविश्वतस्पृथुः । उद्यामेपिर२जाःपा१र्थू२ । अहामिमानो२आकु१भा२यिः । पश्यंजन्मानि२सू
रा१या२ । अयुक्तसप्त२शुंध्यु१वा२ः । सूरोरथस्य२नाप्त्रा१या२ः । ताभिर्यातिस्व२युक्ता१यिर्भा२ः ।

॥ ३७१ ॥ परिधानार्थिन्द्रेगायत्रीसूर्य. ॥ ३७१ ॥ भासादिमा.
॥ ३७२ ॥ परिधानार्थिन्द्रोगायत्रीसूर्यं ॥ ३७२ ॥ भासादिमा.

समत्वाहरि३तारा१था२यि । वहंतिदेव३सूरा१या२ । शोचिष्केशंवि३चाक्षा१णा२३ । हाउ । हाउ
। हाउ । ऋताओवा । ऋताओवा । ऋता३ओ५वा६५६ । ई२३१११ ॥ १६ ॥ १६ ॥ ॥
॥ ३७३ ॥ वाक् । मनःप्राणःप्राणोपानाव्य।नश्चक्षुःश्रोत्रं६·शर्मवर्मभूतिप्रतिष्ठा * । आदित्यःपित्र्य
म् । आदित्यः० । आदित्यः० । आयुःपित्र्यम् । आयुः० । आयुः० ॥ १७ ॥ १७ ॥ ॥ ३७४ ॥ अं
तर्देवेषु३रोचा१सा२यि । अंतर्देवेषु३रोचा१सा२यि । अंतर्देवेषु३रोचा१सा२यि । अंतश्चरति३रो-
चा१ना२ । अस्यप्राणाद३पाना१ता२यि । व्यख्यन्महि३षोदा१यिवा२म् । अंतर्देवेषु३रोचा१सा२
यि । अंतर्देवेषु३रोचा१सा२यि । अंतर्देवेषु३रो२३ । चा२सा२३४ । ओहोवा । ए३ । देवादिवाज्यो
ती२३१११: ॥ १८ ॥ १८ ॥ ॥ ३७५ ॥ हाउ । हाउ । हाउ । भ्राजाभ्राज । भ्राजाभ्राज ।

॥ ३७३ ॥ ऋुलवोनुष्टुप्सूर्यः.
॥ ३७४ ॥ चक्षु साम्नोमित्रावरुणोगायत्रीसूर्यः
॥ ३७५ ॥ श्रोत्रसाम्नोमित्रावरुणात्रिष्टुब्गायत्रीसूर्यः

॥ ३७३ ॥ भासादिमां. फलशस्थापनमां. उपाकर्ममां.
॥ ३७४ ॥ भासादिमां.
॥ ३७५ ॥ भासादिमां. एकादशश्राद्धमां.

* " वाक् । मन =थी=भूतिप्रतिष्ठा " सुधी प्रतिष्ठामां आ मंत्र आवेछे पण तथी वधारे आरण्यगानमां आ मंत्र नीचेदर " आदित्य पित्र्य । ३ । आयु पित्र्य । ३ । " आवेछे ते प्रतिष्ठा कर्त्तीवखते आ बे वधाराना कटका नभणवा लक्षमां राखवुं.

भ्राजाभ्राज । आयुरायुः । आयुरायुः । आयुरायुः । उदुत्यंजा । उदुत्यंजा । उदुत्यंजा । तवेदसं । त
वेदसं । तवेदसं । चित्रंदेवानामुदगादनी२३का३म् । हाउ । हाउ । हाउ । भ्राजाभ्राज । भ्राजाभ्रा-
ज । भ्राजाभ्राज । आयुरायुः । आयुरायुः । आयुरायुः । देवंवहा । देवंवहा । देवंवहा । चक्षुर्मित्रस्य
वरुणस्यआ२३मा३येः । हाउ । हाउ । हाउ । भ्राजाभ्राज । भ्राजाभ्राज । भ्राजाभ्राज । आयुरायुः
। आयुरायुः । आयुरायुः । तिकेतवः । तिकेतवः । तिकेतवः । आप्राद्यावापृथिवीआन्तरी२३क्षा३
न् । हाउ । हाउ । हाउ । भ्राजाभ्राज । भ्राजाभ्राज । भ्राजाभ्राज । आयुरायुः । आयुरायुः । आयुरा
युः । दृशेविश्वा । दृशेविश्वा । दृशेविश्वा । सूर्यआत्माजगतस्तस्थुषा२३श्चा३ । हाउ । हाउ । हाउ ।
भ्राजाभ्राज । भ्राजाभ्राज । भ्राजाभ्राज । आयुरायुः । आयुरायुः । आयुरायुः । यसूर्ये । यसूर्ये । यसू
२३रियाउ । वा३ । ए३ । देवाद्दिवाज्योती२३१११ः ॥ १९ ॥ १९ ॥ ॥ ३७६ ॥ हाउ । हाउ
। हाउ । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । उदुत्यंजा । उदुत्यंजा । उदुत्यजा । हाउहाउहा

उवा । आर्चिः । इंद्रन्नरोनेमधिताहवा२३न्ता३यि । हाउ । हाउ । हाउ । भ्राजाआवा । भ्राजाओ
वा । भ्राजाओवा । तवेदसं । तवेदसं । तवेदसं । हाउहाउहाउवा । शोचिः । हाउ । हाउ । हाउ ।
भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । देवंवहा । देवंवहा । देवंवहा । हाउहाउहाउवा । तापः ।
यत्पार्यायुनजतायिधिया२३स्ता३ः । हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्राजाओ-
वा । तिकेतवः । तिकेतवः । तिकेतवः । हाउहाउहाउवा । हारः । हाउ । हाउ । हाउ । भ्राजाओवा । भ्रा
जाओवा । भ्राजाओवा । दर्शेविश्वा । दर्शेविश्वा । दर्शेविश्वा । हाउहाउहाउवा । स्राहः । शूरानृपा
ताश्रवसाश्रका२३मा३यि । हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । यसू-
र्ये । यसूर्ये । यसूर्ये । हाउहाउहाउवा । नारः । हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा ।
भ्राजाओवा । दर्शेविश्वा । दर्शेविश्वा । दर्शेविश्वा । हाउहाउहाउवा । भारः । आगोमतिव्रजेभजा
तुवा२३न्ना३ः । हाउ । हाउ । हाउ । भ्राजाओवा । भ्राजाओवा । भ्राजाओवा । यसूय । यसूर्ये । य

सूर्य । हाउहाउहाउवा३ । ई२३१११ ॥ २० ॥ २० ॥　　॥ ३७७ ॥ उन्नयामि । होयि । उन्न
यामि । होयि । उन्नयामि । होयि । आदित्यंप्रांचंयंतमुन्नयामि । होयि । आदित्यंप्रांचंयंतमुन्नयामि
। होयि । आदित्यंप्रांचंयंतमुन्नयामि । होयि । अहोरात्राण्यरित्राणि । होयि । अहोरात्राण्यरित्राणि
। होयि । अहोरात्राण्यरित्राणि । होयि । द्यौर्नोहोउ । द्यौर्नोहोउ । द्यौर्नोहोउ । तस्यामसावादित्यई
यंतेहाउ । तस्यामसावादित्यईयतेहा० । तस्यामसावादित्यईयतेहा० । तस्मिन्वयमीयमानईयाम-
हेहाउ । तस्मिन्वयमीयमानईयामहेहा० । तस्मिन्वयमीयमानईयामहेहा० । ईयामहेहाउ । ईयाम
हेहाउ । ईयामहे३ । हाउवा । प्रियेधामक्षियक्षरे । प्रियेधामक्षियक्षरे । प्रियेधामक्षियक्षर२३
१११ ॥ २१ ॥ २१ ॥　॥ इतिश्री मंत्रसंहितायामारण्यगानेषष्ठः प्रपाठकः ॥ ६ ॥

॥ वाचोव्रतपर्व ॥　॥ इत्यारण्यगेयंसमाप्तम् ॥　॥ अथ महानाम्न्यः ॥

॥ ३७८ ॥ ए२ । विदामघान्विदाः । गातुमनुशंसिषः । दायिशा३१उवा२३ । ई२३४डा । ए२ । शि

---

॥ ३७७ ॥ उन्नयेतस्यआदित्योनुष्टुवात्मा.
॥ ३७८ ॥ महानाम्नीनांप्रजापतिर्विराडिंद्रः

॥ ३५१ ॥ भासादिमां. तर्पणमां.
॥ ३५६ ॥ भासादिमां. पितृसंहितामां.

सूयं । हाउहाउहाउवा३ । ई२३१११ ॥ २० ॥ २० ॥ ॥ ३७७ ॥ उन्नयामि । होयि । उन्न
यामि । होयि । उन्नयामि । होयि । आदित्यंप्राचंयंतमुन्नयामि । होयि । आदित्यंप्राचंयंतमुन्नयामि
। होयि । आदित्यंप्राचंयंतमुन्नयामि । होयि । अहोरात्राण्यरित्राणि । होयि । अहोरात्राण्यरित्राणि
। होयि । अहोरात्राण्यरित्राणि । होयि । द्यौर्नोहाउ । द्यौर्नोहाउ । द्यौर्नोहाउ । तस्यामसावादित्यई
यतेहाउ । तस्यामसावादित्यईयतेहा० । तस्यामसावादित्यईयतेहा० । तस्मिन्वयमीयमानईयाम-
हेहाउ । तस्मिन्वयमीयमानईयामहेहा० । तस्मिन्वयमीयमानईयामहेहा० । ईयामहेहाउ । ईयाम
हेहाउ । ईयामहे३ । हाउवा । प्रियेधामङ्स्त्रियक्षरे । प्रियधामङ्स्त्रियक्षरे । प्रियधामङ्स्त्रियक्षर२३
१११ ॥ २१ ॥ २१ ॥ ॥ इतिश्री मंत्रसंहितायामारण्यगानेषष्ठः प्रपाठकः ॥ ६ ॥

॥ वाचोव्रतपर्व ॥ ॥ इत्यारण्यगेयंसमाप्तम् ॥ ॥ अथ महानाम्न्यः ॥

॥ ३७८ ॥ ए२ । विदामघान्विदाः । गातुमनुशङ्सिषः । दायिशा३१उवा२३ । ई३४डा । ए२ । शि

---

॥ ३७७ ॥ उन्नयेतस्यआदित्योनुष्टुवात्मा. ॥ ३५१ ॥ भासादिमां. तर्पणसां.
॥ ३७८ ॥ महानाम्नीनांप्रजापतिर्विराडिंद्रा ॥ ३५६ ॥ भासादिमां. पितृसंहितानां.

क्षाशचीनांपितायि । पूर्वीणांपुरू२ । वसा३१उवा२३ । ई२३४डा । आभिष्टुमभा२यि । टिभिरा३१
उवा२३ । ई२३४डा । स्वर्नाढ् शूऽ२ः । हा३१उवा२३ । ई२३४डा । प्रा । चेतनप्रचेतया । ईंद्रा । द्युम्ना
यना१इपायि । इडा । इंद्रा । द्युम्नायना२इपायि । अथा । ईंद्रा । द्युम्नायना२इपायि । इडा । एवाहि
शक्रारायेवा नायवा१जौ३वाः । शाविष्ठवज्रीन्ना३ । जासायि । मंढ्‌हिष्ठवज्रिन्ना२हौ । जासा३१उ
वा२३ इट्इडा२३१११ ॥ ॥ आया । हिपिबमा२स्सुवा । इडा२३१११ । ए२ । विदारायेसुवीरिया-
म् । भुवोवाजानांपातिर्वशाढ्‌२ । अनुआ३१उवा२३ । ई२३४डा । ए२ । मंढ्‌हिष्ठवज्रिन्नृजसायि । यःश
विष्ठःशूराऽ२ । णा३१उवा२३ । ई२३४डा । यामढ् हिष्ठामघोऽ२ । ना३१उवा२३ । ई२३४डा । अढ् शुर्न
शोचाऽ२यिः । हा३१उवा२३ । ई२३४डा । च्यायि । किंत्वोअभिनोनया । ईंद्रो । विदेतमू२स्तुहायि । इडा
। ईंद्रो । विदेतमू२स्तुहायि । अथा । ईंद्रो । विदेतमू२स्तुहायि । इडा । इशोहिशक्रस्तमूतयेहवा५मा३
हायि । जेतारमपरा३ । जायितम् । सनःस्वर्षदता२३ । हौयि । द्विषा३१उवा२३ । इट्इडा२३११
१ ॥ ॥ क्रातूः । छंदऋता२म्बृहात् । इडा२३१११ । ए२ । इंद्रंधनस्यसातयायि । हवामहेजेतारमपरा२

जितमा३१वा२३। ई३४डा। ए२। सनःस्वर्पदतिद्विषाः। सानःस्वर्पदता२यि। द्विपआ३१उवा२
३। इ३४डा। पूर्वस्ययत्नआ२। न्द्रिवआ३१उवा२३। ई३४डा। अंइ्शुमदायाऽ२। हा३१उवा२३
। ई३४डा। सू। म्नआधेहिनोवसाउ। पूर्तीः। शविष्ठशा२स्यतायि। इडा। पूर्तीः। शाविष्ठशा२स्यता
यि। अथा। पूर्तीः। शविष्ठशा२स्यतायि। इडा। वशीहिशक्रोनूनंतंनव्यइ्सा१न्या३सायि। प्रभो
जनस्यवा३। ताहान्। समर्थपुत्रवा२३हायि। वाहा३१उवा२३। इट्इडा२३१११ ॥ ॥ शूरो। यो
गो२रुगा२च्छतायि। इडा। सखा। सुशेवो२द्वयुः। इट्इडा२३१११ ॥ आयिवा। ह्रियेवा२३१
११। होयि। हो। वाहा३१उवा२३। ई३४डा। आयिवा। ह्रियश्ना२३१११यि। होयि। हो। वाहा
३१उवा२३। इ३४डा। आयिवा। हिइंद्रा२३१११यि। होयि। हो। वाहा३१उवा२३। ई३४डा
। आयिवा। हिपूपा२३१११न्। होयि। हो। वाहा३१उवा२३। ई३४डा। आयिवा। हिदेवा२३
१११ः। होयि। हो। वाहा३१उवा२३। ई३४डा ॥ २२ ॥ २२ ॥ ॥ महानाम्निपर्व ॥

॥ इतिश्रीमंत्रसंहितायामारण्यगानंसमाप्तम् ॥ आरण्यगानेमंत्रसंख्यांकाः ॥ १३२ ॥

# ॥ छन्दआर्चिकपरिशिष्टम् ॥

## ॥ अथ भारण्डसाम प्रारंभः ॥ ‡‡

॥ ३७९ ॥ ॐ उद्वयाम्। तमसस्पारी२। ज्योतिःपश्यन्तउत्तरा२म्। स्वःपश्यन्तउत्तरा२म्। देवन्देवत्रा२सू२३४र्यम्। अगन्मज्ज्योतिरुत्तमा१म्। स्वसारः। आतातुनआतोतू२३४। ओहोवा। ओ२वातः। ओ२वातः। ओ२वातः। वातोवातः। वातोवातः। वातानृम्णानिपूरा३याः। यमोहाउ। यमोहा०। यमोहा०। पितरोहाउ। पितरोहा०। पितरोहा०। भारण्डोहाउ। भारण्डोहा०। भारण्डोहा०। इमाह्स्ता२३४माम्। अहोते२३४जा। तावेदसे३। होयि। होयियेउ। होयिये३। होयिये३। होइये। होइये। होइये। उ२वातः। उ२वातः। उ२वातः। वातोवातः। वातोवातः। वातोनृम्णानिपूरा३याः। यमोहाउ। यमोहा०। यमोहा०। पितरोहाउ। पितरोहा०। पितरोहा०। भा-

‡‡ अमे भारण्डना ऋचाछन्दनो तपास करता क्याइथी पण मळ्या मथी तो विद्वज्जनोने विनंति करवानी के, जेमनी स्मृतिमां वा पुस्तकमां होय तेणे लखी जणाववाथी द्वितीयावृत्तिमां छापवामां आव

॥ ३७९ ॥ लक्षहोममां पश्चिमद्वारनासूक्तमां

रण्डोहाउ । भारण्डो० । भारण्डो० । रथामी२३४वा । सम्मोहे२३४म( । मानिपिया३ । होयि । हो
यिये३ । होयिये३ । होयिये३ । होइये । होइये । होइये । उ२स्रतः । उ२वातः । उ२वातः । वातो
वातः । वातोवातः । वातोनृम्णानिपूरा३याः । अमोहाउ । यमोहा० । यमोहा० । पितरोहाउ । पि
तरो० । पितरोहा० । भारण्डोहाउ । भारण्डो० । भारण्डो० । भद्राही२३४नाः । प्रमाती२३४रा
। स्यास६ स:३ । होयि । होयिये३ । होयिये३ । होयिये३ । होइये । होइये । होइये । उ२वातः । उ२
वातः । उ२वातः । वातोवातः । वातोवातः । वातोनृम्णानिपूरा३याः । यमोहाउ । यमोहा० । यमो
हा० । पितरोहाउ । पितरोहा० । पितरोहा० । भारण्डोहाउ । भारण्डो० । भारण्डो० । अभ्रायिसा२
३४प्यायि । मारायिपा२३४मा । वायंतवा३ । होयि । होयिये३ । होयिये३ । होयिये३ । होइये । हो
इये । होइये । उ२वातः । उ२वातः । उ२वातः । वातोवातः । वातोवातः । वातोनृम्णानिपूरा३याः
। यमोहाउ । यमोहा० । यमोहा० । पितरोहाउ । पितरोहा० । पितरोहा० । भारण्डोहाउ । भारण्डो०
। भारण्डो० । भारण्डा३४औहोवा । ए । वातोनृम्णाभिपूरयद्यमःपितरोभारण्डः । ए । वातोनृम्णा-
निपूरयद्यमःपितरोभारण्डः । ए । वातोनृम्णानिपूरयद्यमःपितरोभारण्डा२ । इ२३४५ ॥ १ ॥

# ॥ छन्दआर्चिकपरिशिष्टम् ॥

## ॥ अथ तवश्यावीय साम प्रारंभः ॥

॥१३४॥
॥ ३८० ॥ ३० । हुवे २३४५ । ३०भूः । ३०भूमिर्दिवमन्तरिक्षम् । ३०भुवः । ३०ऋचोयजूꣳषिसामानि ।
३०भर्गोदेवस्यधीमाहो२३४५ । ३०स्वः । ३०प्राणापानोव्यानःसमानउदानः । ३०धियोयोनःप्रचो२३
४५ । ३०महः । ३०जनः । ३०तपः । ३०सत्यं । ३०पुरुषाः । ३०परोरजोअमृतोम् । ३०हवे २३४५ । हुम् । आ
२ । द्यावो । आ२३४५ । ३०भूमिरंतरिक्षन्द्यौः । ३०तत्सवितुर्वरेणियोम् । ३०ऊऽ२कं । हाउ । हाउ । हाउ
हो३वाक् । ३०ऊऽ२कं । हाउ । हाउ । हाउ । हो३वाक् । ३०ऊऽ२कं । हाउ । हाउ । हाउ । हो३वाक् । ३०
चꣳहोओयजोअमृतोम् । ओंऊऽ२कं । हाउ । हाउ । हाउ । हो३वाक् । ओंऊऽ२कं । हाउ । हाउ । हाउ । हो
३वाक् । ३०ऊऽ२कं । हाउ । हाउ । हाउ । हो३वाक् । ३०प्राणोपानोव्यानोसमानउदानः । धियोयोनःप्र

चो२३४५। ओ३ऊ५२कं। हाउ। हाउ। हाउ। हो३वाक्। ओ३ऊ५२कं। हाउ। हाउ। हाउ। हो३वाक्। ओ३
ऊ५२कं। हाउ। हाउ। हाउ। हो३वाक्। धर्मो२धर्मः। धर्मो२धर्मः। धर्मो२धर्मः। धर्मविधर्म। ध
र्मविधर्म। धर्मविधर्म। सत्यंगाय। सत्यंगाय। सत्यंगाय। ऋतंवद। ऋतंवद। ऋतंवद। हद्द्व चं
व२वंव२वम्। हद्द्व वंव२चंव२वम्। हद्द्व वंव२वंव२वम् ॥ १ ॥ १ ॥ छ ॥ छ ॥ छ छ ॥

॥ इतिश्री तवश्यावीयसामसमाप्तम् ॥ इतिश्री मंत्रसंहितायामारण्यगानंसमाप्तम् ॥

॥ आरण्यगानेपरिशिष्टादिमंत्रसंख्यांकाः ॥ १३४ ॥ छ ॥ छ ॥ छ ॥ छ ॥

॥ सामवेदस्य मंत्रसंहितायामारण्यगान समाप्तम् ॥ संवत् १९४६ कार्त्तिक ॥

॥ श्रीगणेशायनम ॥



॥ श्रीसामवेदायनम. ॥

# ॥ अथ ऊहगानस्य मंत्रसंहितायाः संग्रहः ॥

## ॥ अथ प्रथमप्रपाठकः प्रारंभः ॥

॥ ३८१ ॥ का५या। नश्चा३यित्रा३आभूवात्। ऊ। ती। सदावृधः स। खा। औ३होहायि। कया२ ३श
चायि। ष्ठयोहो३। हुम्मा२। वा॰२र्त्तौ३५हायि ॥ का५स्त्वा। सत्यो३मा३दानाम्। मा। हिष्ठोमात्सा

| | |
|---|---|
| ॥ ३८१ ॥ वामदेवोगायत्रीन्द्र | ॥ ३८१ ॥ आधानमा. महावामदेव्यमा |

देथ । सा । औ३होहायि । हढा२३चिदा । रुजोहो३ । हुम्मा२ । वाऽ२सो३५हायि ॥ आ५भी । पुणा
३:सा३खीनाम् । आ । वित्ताजरायित् । णाम् । औ३होहायि । ज्ञाता२३भवा । सियोहो३ । हुम्मा२ ।
ताऽ२यो३५हायि ॥ ५ ॥ १ ॥ ॥ ३८० ॥ यज्ञा५य । ज्ञा३वो३ग्रायायि । आयिरायिरा । चा३दा
क्षा३सायि । प्रग्री२म्वयममृतं । जाता२३वा । हुम्माइ । दा३साम् । प्रायंमिल६ सुशा२६ सिपाउ
॥ प्रायाम् । मायिलाम् । सू३शा६ सो३पाम् । ऊज्जोनपा२त६सहि । नाया२३मा । हुम्मायि । स्मा
३यूः । दाशेमहव्यदा२तयाउ ॥ दाशे । माहा । ध्या३दाता३यायि । भुवद्वाजे२५वावि । ताभू२३
वात् । हुम्मायि । वा३र्द्धायि । ऊतत्रातातनू२नाउ । वा२३१११ ॥ १४ ॥ २ ॥ ॥ इतिश्री
मंत्रसंहितायामूहगाने प्रथमस्यार्द्ध प्रपाठकः ॥ * ॥ अथ द्वितीयप्रपाठकः प्रारंभः ॥
॥ ३८३ ॥ अभिप्रवःसुरा । धसा३४ओहोवा । आइंद्रमर्च । यथाविदा२३४यि । ओ६हा । यो

| | |
|---|---|
| ॥ ३८१ ॥ अग्निर्वैश्वानर ककुबुत्तरावृहत्यासिः | ॥ ३८२ ॥ आधानमा |
| ॥ ३८३ ॥ इन्द्रोपूहतींद्र | ॥ ३८३ ॥ आधानमो |

* आ ऊहगानमा अदर जे प्रपाठकमा मळो आवेलाछे ते प्रपाठक लख्याछे सोधायला लरोल नथी

जरितृभ्यः । माधा२३वा । पुरू२ । चा२३४सूः । सहस्रेणायिवा२३शा । हुम्मायि । क्षा२ता२३४औ होवा ॥ सहस्रेणवाशि । क्षता३४औहोवा । साहस्रेणे । वशाविक्षता२३४यि । ओ२३हा । शतानीकेव । प्राजा२३यिगा । तिधा२ । ष्णू२३४या । हतिवृत्राणि३दा । हुम्माइ । शूर्२या२३४औहोवा ॥ हं तिवृत्राणिदा । शुपा३४औहोवा । हांतिवृत्रा । णिदाशुपा२३४यि । ओ२३हा । गिरेरिव प्र । रासा२ ३आ । स्यपा२यि । न्वा२३४यिरायि । दत्ताणिपूरू२भो । हुम्माइ । जा२सा२३४औहोवा । वा२ ३४सू ॥ ३ ॥ ३ ॥ ॥ इतिश्री मंत्रसंहितायामूहगाने द्वितीयस्यार्द्धः प्रपाठकः ॥

॥ अथ तृतीयः प्रपाठकः प्रारंभः ॥ ॥ ३८४ ॥ (तृतीयऋक्प्रारंभ) रसंतेमाइ । त्रोअर्य- मा । पिरंतूवा२ । रुणःकवायि । पवमाना२ । स्यम । रू२ता२३४औहोवा । इषोवृधे१ ॥ २ ॥ ४ ॥ ॥ ॥ इतिश्री मंत्रसंहितायामूहगाने तृतीयस्यार्द्धःप्रपाठकः ॥ ॥ अथ पंचम प्रपाठकः प्रारंभः ॥ ॥ ३८५ ॥ (तृतीयऋक्प्रारंभ) तुवंयवायि । घ्रदाशू२३पाः । नृदण्पाहिश्रृ

॥ ३८४ ॥ इषोवृधीयोगायत्रीसोम ॥ ३८४ ॥ उपाकर्मसा (शर्कराज्ञानमा) एकीसा-

॥ ३८५ ॥ उचनायिराइगायत्र्यानि ॥ ३८५ ॥ उपाकर्मसा.

। णुर्हिगा२३थिराः । रक्षातो२का३म् । ऊता२३हा३४३चि । त्मा२३४नो६हायि ॥ ११ ॥ ५ ॥

॥ इतिश्री मंत्रसंहितायामूहगाने पंचमस्यार्द्धः प्रपाठकः ॥ ॥ अथ दशमप्रपाठकः प्रारंभः ॥

॥ ३८६ ॥ कयानश्चित्रआभू३वात् । ऊतीसदावृधाः । हुम् । सा२३४खा । काया३उवा । शचि । ष्ठयो२३४वा । वा५र्त्तो६हायि ॥ कस्त्वासत्योमदा३नाम् । मंहि ष्ठोमत्सदा । हुम् । धां२३४साः । दार्ढा३उवा । चिदा । रुजो२३४वा । वा५सो६हायि ॥ अभिषुणःसखी३नाम् । अविताजरा । हुम् । तृ२३४णाम् । शाता३उवा । भवा । सियो२३४वा । ता५यो६हायि ॥ ८ ॥

॥ ६ ॥ ॥ इतिश्री मंत्रसंहितायामूहगाने दशमस्यार्द्धःप्रपाठकः ॥ ॥ अथ द्वादशप्रपाठकः प्रारंभः ॥

॥ ३८७ ॥ अभ्वन्नसाऔहोहायि । वारावा२३४न्ताम् । वंदाध्या२३४हायि । अग्नाइन्नमा३४औहोवा । इहा२३४हायि । उद्दुवा२३४भीः । सम्राज । तामध्वरा२३-। औहोवा । इहा२३४हायि । औहा३१२३४णाम् । एहिया६हा ॥ सधानःसाऔहोहायि । नूः-

॥ ३८६ ॥ सुपर्णोगायत्रींद्रः
॥ ३८७ ॥ इंद्रोगायत्र्याग्निः

॥ ३८६ ॥ एकादशान्यासमां.
॥ ३८७ ॥ आधानमां.

शावा२३४सा। एयुप्रा२३४हा। गामासुशा३४। औहोवा। इहा२३४हायि। उहुवा२३४वाः। मां द्वा६अ। स्माकंत्रमू३४। औहोवा। इहा२३४हायि। औहो३१२३४। यात्। एहिया६हा ॥ स नोदूराऔहोहायि। चाअसा२३४च्छा। निमार्त्ता२३४हायि। यादधा३४। औहोवा। इहा२३४हायि। उहुवा२३४योः। पाहिस। दामिद्विश्वा३४। औहोवा। इहा२३४हायि। औहो३१२३४। यूः। एहिया६हा। हों५इ। डा ॥ १७ ॥ ७ ॥ ॥ इतिश्री मंत्रसंहितायामूहगाने द्वादश प्रपाठकः ॥ १२ ॥ ॥ अथ चतुर्दशप्रपाठकः प्रारंभः ॥ ॥ ३८८ ॥ इदंविष्णाऔहोहायि। वायिचक्रा२३४मायि। त्रेधाना२३४इहायि। दधेपा२३४। औहोवा। इहा२३४हायि। उहुवा२३४दाम्। समूढं। आस्यपा६सू३४। औहोवा। इहा२३४हायि। औहो३१२३४। लाइ। एहिया६हा ॥ त्रीणिपदाऔहोहायि। वायिचक्रा२३४मायि। विष्णुर्गो२३४हा। पाअदाभा३४। औहोवा। इहा२३४हायि। उहुवा२३४याः। अतोध। माणिधारा३४। औहोवा। इहा२३४हा

यि । ओहो३१२३४ । यान् । एहियाद्दहा ॥ विष्णोःकर्मा ओहोहायि । णायिपश्या२३४ता । य-
तोत्रा२३४हा । तानिपस्या३४ । ओहोवा । इहा२३४हायि । उहुवा२३४शायि । इंद्रस्य । यूजियः
सो३४ । ओहोवा । इहा२३४हायि । ओहो३१२३४ । खा । एहियाद्दहा । हो५इ । डा ॥ ७ ॥८॥

॥ इतिश्री मंत्रसंहितायामूहगाने चतर्दशस्यार्द्धःप्रपाठकः ॥ अथ सप्तदशप्रपाठकः प्रारंभः ॥

॥ ३८९ ॥ इमद्ध्स्तोममर्हतजातवेदसायि । रथमिवसंमहेमामनीपया । भद्राहा२३इनाः । प्रामतिरस्यसद्ध्स । यध्मायि ॥ भरामेध्मंकृणवामाहवींद्ध्पितायि । चितयंतःपर्वणापर्वणायाम् । जीवाना२३वायि । प्रातराद्ध्साधयायि । याध्मायि ॥ शकेमत्वासमिधद्ध्साधयाधियाः । त्वेदेवाहविरदंत्याहुताम् । तुवमा२३दी । त्याद्ध्आवहतान्ह्युश्म । स्यध्मायिसाख्या । ओहो३४वाहायि । मा । राइया२३मा३ । होवा३हायि । वयंता२३वा३४३ । ओ२३४५इ । डा ॥१५॥ ॥ ९ ॥

॥ इतिमंत्रसंहितायामूहगाने सप्तदशस्यार्द्धःप्रपाठकः ॥ ॥ अथैकाविं

शतितमप्रपाठकः प्रारंभः ॥ ॥ ३९० ॥ उपा५स्मै । गा३या३तानाराः । पा३वामा३ना ।
पा२३आ । हुम्माइ । दा३वायि । आभिदेवा६ इया२क्षताउ ॥ तेआ । भितेमा । धू३नापा३याः ।
अथा२वो । णोआ२३शा । हुम्मायि । श्रा३यूः । दायिदेवायदा२इवयाउ ॥ यूसाः । नःपवा ।
स्वा३शांगा३वायि । शंजा२ना । यशा२३मा । हुम्माइ । वाँ३तायि । शा६ राजन्नोपधा२यिम्यआउ
॥ ११ ॥ १० ॥ ॥ ३९१ ॥ दवा५यिद्यु । ता३ती३याऽत्वा । पा३रायिष्टो३भा । ता२३आ ।
हुम्माइ । का३र्पा । सोमाःशुक्रागवा२शिराउ ॥ राहायि । न्वानोहे । तृ३भाइहा३त्ताः । आवा२
जम् । वाजा२३या । हुम्माइ । क्रा३भीत् । साइदंतोवनुषो२यथाउ ॥ धान्न्ये । धक्तोमा । सू३
वास्ता३यायि । संजा२ग्मा । नोदा२३यिवा । हुम्माइ । का३वायि । पावस्वसूरियो२दृशाउ ॥ ॥
॥ १२ ॥ ११ ॥ ॥ ३९२ ॥ पवा५मा । ना३स्या३तेकावायि । वा३जाइंसा३गाः । आ२३

| | |
|---|---|
| ॥ ३९० ॥ अग्निर्वैश्वानरोगायत्रीसोमः | ॥ ३९० ॥ समहस्वमाविनायकशांतिमां. |
| ॥ ३९१ ॥ अग्निर्वैश्वानरोगायत्रीसोम. | ॥ ३९१ ॥ समहस्मलीविनायकशांतिमां. |
| ॥ ३९२ ॥ अग्निर्वैश्वानरोगायत्रीसोम. | ॥ ३९२ ॥ समहस्याविनायकशांतिमां. |

सा । हुम्माइ । क्षा३ता । आर्वतानश्रवा२स्यवाउ ॥ वाआ । छाकोशाम् । मा३धूश्रू३ताम् । अ
सा२श्रम् । वारे२३आ । हुम्मायि । व्या३यायि । आवावशंतधा२इतयाउ ॥ याआ । छासमू । इा३
साईदा३वाः । अस्ता२इगा । वोना२३धे । हुम्मायि । ना३वाः । आग्मन्नृतस्ययो२निमाउ । वा२३
१११ ॥ १३ ॥ १२ ॥ ॥ इतिश्री मंत्रसंहितायामूहगाने एकविंशतितमस्यप्रथमार्द्धः प्र
पाठकः ॥ ॥ ३९३ ॥ किमित् । तेवा३यि१ष्णोपरिचा । क्षिनामप्रथद्वक्षेशिपिविष्टोअस्मा२३यि
। मावर्प्पोआ३१२३ । स्मदपगूहएतदा५इन्या । रूपःसमा३१२३यि । धंबोवा । भू५थो६हायि ॥
प्रतत् । तआ३ । यशिपिवायि । ष्टहव्यमर्यःशा६सामिवयुनानिविद्वा२३न् । तांत्वागृणा३१२३ । मि
तवसमतव्यान्क्षा५यंताम् । आस्यरजा३१२३ । सःपोवा । रा५को६हायि ॥ वषट् । तेवा३यि ।
ष्णयासआ । कृणोमितन्मेजुपस्वशिपिविष्टहव्या२३म् । वार्द्धतुत्वा३१२३ । सुष्टुतयोगिरोमेयू५यंपा
। तासुवस्ता३१२३यि । भिःसोवा । दा५नो६हायि ॥ ६ ॥ १३ ॥ ॥ इतिश्री मंत्रसंहि

तायामूहगाने एकविंशतितमप्रपाठकः ॥ २१ ॥ ॥ इतिश्री मन्त्रसंहितायामूहगानं स
माप्तम् ॥ ऊहगाने मंत्रसंख्यांकाः ॥ १३ ॥ छ ॥ छ ॥ छ ॥ छ ॥ ॥ छ ॥

॥ सामवेदस्य मन्त्रसंहितायामूहगान समाप्तम् ॥ संवत् १९४६ मार्गशीर्ष ॥ छ ॥

॥ श्रीगणेशायनमः ॥



॥ श्रीसामवेदायनमः ॥

# ॥ अथ ऊह्यगानस्य मंत्रसंहितायाः संग्रहः ॥

## ॥ अथ प्रथमप्रपाठकः प्रारंभः ॥

॥ ॥ २०४ ॥ ॐ अभित्वाशूरनोनुमोवा । आदुग्धायिवधेनवईशानमस्यजगतः । सुवार३ दृं-
शाम् । आइशानमार३इंद्रा३ । सूस्थूर३४षा । ओवा६ हाउवा ॥ ईशोवा । नामिंद्रसस्थुषोन-
त्वावाह्‌ अन्योदिवियः । नपार३र्थिवाः । नजातोना२३जा३ । नायिप्या२३४ता । ओवा६ । हा

उवा ॥ नजोवा । तोनजनिष्यतेअभ्वायंतेमघवान्नि । द्रवा२३जिनाः । गर्व्यतस्त्वा२३हा३ । वा
मा२३४हा । ओवा६ । हाउवा ॥ १ ॥ १ ॥ ॥ ३९५ ॥ औहोयित्वामिद्धिहवामहा३ए । सा
तौवाजा । स्याकारा२३४वाः । तुवा३४ । आहोभा । वृत्रायिप्वायि । द्रासा३१त् । पतिन्ना२३४राः
। त्वांकाष्टा३४ । औहोवा । सू२आर्वा२३ता. । उहुवा६हाउ । वा ॥ औहोयितुवा२म । काष्टा ।
सूअर्वा२३४ताः । सत्वा३४ । औहोवा । नश्चाधित्रवा । ज्राहा३१ । स्तघृण्णू२३४या । सहस्तवा३
४ । औहोवा । नो२आद्रा२३यि । वाः । उहुवा६हाउ । वा ॥ औहोयिमहा३ए । स्तवा । नोअ
द्रा२३४इवा । गामा३४औहोवा । शुवा६रथायि । यामा३१यि । द्रसंका३४यिरा । सत्रावाजा३
४ । औहावा । ना२जायि । ना२जिग्यू२३पायि । उहुवा६हाउ । वा । हस् ॥ ५ ॥ २ ॥ ॥

॥ इतिश्री मंत्रसंहितायामुह्यगाने प्रथमस्यार्द्ध-प्रपाठकः ॥ * ॥ अथ द्वितीयप्रपाठकः

| | |
|---|---|
| ॥ ३९५ ॥ भरद्वाज ककुबुत्तरावृहतींद्र | ॥ ३९६ ॥ आधानमा |

* आ उह्यगाननी अदर जे प्रपाठकमा मळो आवेलाछे ते प्रपाठक लख्याछे सीवायना लखेल नथी

प्रारंभः ॥ ॥ ३९९ ॥ ( तृतीयक्रमपारंभः ) इष्कर्त्तारम । इडा सुवः । इडा । ध्वरस्यप्रचे । इडा । सुवः । इडा । तसक्षयंतं । इडा । सुवः । इडा । राधसोमहः । इडा । सुवः । इडा । रातिंवामास्य । हा ३१उवा२३ । सुभगांमाहीम् । हा३१उवा२३ । इपंवधासि । हा३१उवा२३ । सानासिंह्‌रायिम् । हा ३१उवा२३ । सूर२३४वाः । इह । हा३१उवा२३ । ज्यो२३४तिः ॥ आ । ता३ । वानंम्ही । नं‌महीर । नंम्हि । नंमहि । नंमहि । वाम् । वा३इ । ष्वादर्शताम् । दर्शता३म् । दर्शताम् । दर्शताम् । दर्शताम् । आ । श्री३म् । सुम्रायद्य । म्रायदा३ । म्रायद । म्रायद । म्रायद । धायि । रे३ । पूराजनाः । रोजना३ः । रोजनाः । रोजनाः । रोजनाः । ए । व्रतमसुवरशकुनः ॥ शुक्राओहोहोहायि । गाद्‌ सा१म्रा२ । धत्ताओहोहोहायि । मांतू१वा२ । गिराओहोहोहायि । देवा३याम् । मानुपोहो३ । हुम्मा२ । युगा । औ३होवा । हो५इ । डा ॥ १४ ॥ ३ ॥ ॥ इतिश्री मंत्रसंहिताया महागाने द्वितीयप्रपाठकः ॥ २ ॥ ॥ संवत्सरपर्व ॥ ॥ अथ तृतीयप्रपाठकः प्रारं

भः ॥ ॥ ३९७ ॥ औहोयिकिमित्तेविष्णोपरिचा३ए । क्षिनामप्रयद्ववक्षेशिपाधि । वायिष्ठोआ
२३४स्मो । मावा३४ । औहोवा । पाआस्मदा । पगूहा३१ः । एतद्यदा२३४न्या । रुपःसमा३४ । औ
होवा । था२थिवाभू२३४था । उहुवा६हाउ । वा ॥ औहोयिथप्रा३ए । तत्तेअद्यशिपिविष्टहव्य-
मर्यःशंह् नामिवयू । नानायिवा२३४यिद्वान् । तत्वा३४ । औहोवा । गृणामिता । वसामा३१ । तव्या
न्क्षया२३४न्ताम् । अस्यरजा३४ । औहोवा । सा२ःपारा२३४ । कायि । उहुवा६हाउ । वा ॥
औहोकिवा३ए । पर्‌तेविष्णवासआकृणोमितन्मेजुषस्वाशिपाधि । वाचिष्ठाहा२३४व्याम् । वर्द्धा३४
। औहोवा । तुत्वासुष्टू । नाया३१ः । गिरोमेयूया२३४म्पा । तामुवस्ता३४ । औहोवा । भा२थिःसा
। भा२थिःसदा२३४ । नाः । उहुवा६हाउ । वा । हस् ॥ १५ ॥ ४ ॥ ॥ इतिश्री मंत्रसंहि
तायामुह्यगाने तृतीयस्यार्द्धः प्रपाठकः ॥ इतिश्री मंत्रसंहितायामुह्यगानं समाप्तम् ॥

॥ ३९७ ॥ भरद्वाजत्रिष्टुप्सोम | ॥ ३९७ ॥ विष्णुसूक्तमां.

# ॥ अथ छन्दस्यार्चिकस्य मंत्रसंहितायाः संग्रहः ॥

## ॥ अथ प्रथमप्रपाठकः प्रारंभः ॥

॥ श्रीसामवेदायनमः ॥ ॥ अथ प्रथमा दशती प्रारंभ ॥ ॥ ३९८ ॥ ॐ अग्नआयाहिवीतयेगृणानो
हव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ १ ॥ १ ॥ ॥ ३९९ ॥ त्वमग्नेयज्ञानाᳬ होताविश्वेषा
ᳬ हितः ॥ देवेभिर्मानुषेजने ॥ २ ॥ २ ॥ ॥ ४०० ॥ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥
अस्ययज्ञस्यसक्रतुम् ॥ ३ ॥ ३ ॥ ॥ ४०१ ॥ अग्निर्वृत्राणि जंघनद्द्रविणस्युर्विपन्यया ॥ स-
मिद्धःशुक्रआहुतः ॥ ४ ॥ ४ ॥ ॥ ४०२ ॥ प्रेष्ठंवोअतिथिᳬ स्तुषेमित्रमिवप्रियं ॥ अग्नेरथंन-

---

॥ ३९८ ॥ भरद्वाजोगायत्र्यग्निः [गायत्र्यग्निः
॥ ३९९ ॥ भरद्वाजःशकुमातिपरीत्क्मध्या
॥ ४०० ॥ मधांतिथियार्हस्पत्योकाण्वागाय-
॥ ४०१ ॥ भरद्वाजोगायत्र्यग्निः [ त्र्यग्निः
॥ ४०२ ॥ उशनाविराड्गायत्र्यग्निः

॥ ३९८ ॥ एकादशन्यासमा कौतुकवधनमा अप्राज्याहुतिमा अग्न्युत्तारण
॥ ३९९ ॥ उपाकर्ममा. अग्न्युत्तारणमा एकादशन्यासमा. [ मा. उपाकर्ममां
॥ ४०० ॥ एकादशन्यासमां उपा० अग्न्युत्ता० होमप्रकरणमा. अप्राज्याहुतिमां.
॥ ४०१ ॥ अग्न्युत्तारणमा. उपाकर्ममां.
॥ ४०२ ॥ अग्न्युत्तारणमां उपाकर्ममा.

वेदं ॥ ५ ॥ ५ ॥ ॥ ४०३ ॥ त्वन्नोअग्नेमहोभिःपाहिविश्वस्याअरातेः ॥ उतद्विषोमर्त्यस्य ॥ ॥ ६ ॥ ६ ॥ ॥ ४०४ ॥ एह्यूषुब्रवाणितेग्नइत्थेतरागिरः ॥ एभिर्वर्द्धासइंदुभिः ॥ ७ ॥ ७ ॥ ॥ ४०५ ॥ आतेवत्सोमनोयमत्परमाच्चित्सधस्थात् ॥ अग्नेत्वांकामयेगिरा ॥ ८ ॥ ८ ॥ ॥ ॥ ४०६ ॥ त्वामग्नेपुष्करादध्यथर्वानिरमंथत ॥ मूर्ध्नोविश्वस्यवाघतः ॥ ९ ॥ ९ ॥ ॥ ४०७ ॥ अग्नेविवस्वदाभरास्मभ्यमूतयेमहे ॥ देवोह्यसिनोदृशे ॥ १० ॥ १० ॥ ॥ इति प्रथमदशती ॥ १ ॥ ॥

॥ अथ द्वितीया दशती प्रारंभ ॥ ॥ ४०८ ॥ उपत्वाजामयोगिरादेदिशतीर्हविष्कृतः ॥ वायोरनीकेअस्थिरन् ॥ ३ ॥ ११ ॥ ॥ ४०९ ॥ जरावोधतद्विविड्ढिविशेविशेयज्ञियाय ॥ स्तोमं रुद्रायदृ

| | |
|---|---|
| ॥ ४०३ ॥ सुदीतिर्गाय यग्नि | ॥ ४०३ ॥ अग्न्युत्तारणमा. उपाकर्ममां |
| ॥ ४०४ ॥ भरद्वाजोगायत्र्यग्नि | ॥ ४०४ ॥ अग्न्युत्तारणमा उपाकर्ममा. |
| ॥ ४०५ ॥ वत्स काण्वोगायत्र्यग्नि | ॥ ४०५ ॥ अग्न्युत्तारणमा. उपाकर्ममां |
| ॥ ४०६ ॥ भरद्वाजोगायत्र्याग्न | ॥ ४०६ ॥ अग्न्युत्तारणमा उपाकर्ममां. |
| ॥ ४०७ ॥ सुमित्रोगायत्र्याग्निः | ॥ ४०७ ॥ अग्न्युत्तारणमां. उपाकर्ममां. |
| ॥ ४०८ ॥ अग्निर्गायत्र्यग्नि | ॥ ४०८ ॥ होममा |
| ॥ ४०९ ॥ शुनःशेपोगायत्रीरुद्र | ॥ ४०९ ॥ वास्तुमां |

शोके ॥ ५ ॥ १२ ॥ ॥ ४१० ॥ आदित्प्रत्नस्यरेतसोज्योतिःपश्यंतिवासरं ॥ परोयदिध्यते
दिवि ॥ १० ॥ १३ ॥ ॥ इति द्वितीया दशोती ॥ २ ॥ ॥ अथ तृतीया दशोती प्रारभ. ॥ ॥ ४११ ॥ अग्नि
रिग्मेनशोचिषायासद्विश्वंन्यत्रिणं ॥ अग्निर्नोवध्सतेरयिं ॥ २ ॥ १४ ॥ ॥ ४१२ ॥ अ
ग्नेमृडमहाथ्अस्ययआदेवयुंजनं ॥ इयेथबर्हिरासदं ॥ ३ ॥ १५ ॥ ॥ ४१३ ॥ अग्नेरक्षाणो-
अध्हमःप्रतिस्मदेवरिषतः ॥ तपिष्ठरजरोदह ॥ ४ ॥ १६ ॥ ॥ ४१४ ॥ अग्नेयुङ्क्ष्वाहियेत-
वाश्वासोदेवसाधवः ॥ अरंवहंत्याशवः ॥ ५ ॥ १७ ॥ ॥ ४१५ ॥ अग्निर्मूर्द्धादिवःककुत्पतिः
पृथिव्याअय ॥ अपाध्रेताध्सिजिन्वति ॥ ७ ॥ १८ ॥ ॥ ४१६ ॥ परिवाजपतिःकविरग्नि

॥ ४१० ॥ वत्सोगायत्रीसूर्य
॥ ४११ ॥ भरद्वाजोगायत्र्यग्नि
॥ ४१२ ॥ वामदेवोगायत्र्यग्नि
॥ ४१३ ॥ वसिष्ठोगायत्र्यग्नोरक्षोहा
॥ ४१४ ॥ भरद्वाजोगायत्र्यग्नि
॥ ४१५ ॥ विरूपोगायत्र्यग्निः
॥ ४१६ ॥ वामदेवोगायत्र्यग्निः

॥ ४१० ॥ होमप्रकरणमां.
॥ ४११ ॥ बलिदानमां ध्वजापताकामां. सपुंडीकरणमां. मंडलमां. होमप्रकरणमां.
॥ ४१२ ॥ वास्तुमां. अग्न्याज्याहुतिमां.
॥ ४१३ ॥ रुद्रपूजनमां.
॥ ४१४ ॥ वास्तुमां.
॥ ४१५ ॥ नवग्रहमां. ( मंगळनो ) होमप्रकरणमां. तर्पणमां.
॥ ४१६ ॥ अन्वष्टकामां.

हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ १० ॥ १९ ॥ ॥ ४१७ ॥ उदुत्यंजातवेदसंदेवंवहंति
केतवः ॥ दृशेविश्वायसूर्यं ॥ ११ ॥ २० ॥ ॥ ४१८ ॥ शन्नोदेवीरभिष्टयेशन्नोभवंतुपीतये ॥
शंयोरभिस्रवंतुनः ॥ १२ ॥ २१ ॥ ॥ इति तृतीया दशती ॥ ३ ॥ ॥ अथ चतुर्थी दशती प्रारंभ. ॥ ॥
॥ ४१९ ॥ यज्ञायज्ञावोअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतंजातवेदसंप्रियंमित्रंनशꣳसिषं ॥
॥ १ ॥ २२ ॥ ॥ ४२० ॥ अग्नेविवस्वदुषसश्चित्रꣳराधोअमर्त्य ॥ आदाशुषेजातवेदोवहात्व
मद्यादेवाꣳउषर्बुधः ॥ २ ॥ २३ ॥ ॥ ४२१ ॥ त्वमित्सप्रथाअस्यग्नेत्रातर्ऋतःकविः ॥ त्वांवि
प्रासःसमिधानदीदिवआविवासंतिवेधसः ॥ ८ ॥ २४ ॥ ॥ ४२२ ॥ योविश्वादयतेवसुहो-

॥ ४१७ ॥ प्रस्कण्वोगायत्रीसूर्यः
॥ ४१८ ॥ सिंधुद्वीपोगायत्र्यापः
॥ ४१९ ॥ शंयुर्बृहत्यग्निः
॥ ४२० ॥ प्रस्कण्वोबृहत्यग्न्युषसः
॥ ४२१ ॥ भर्गोबृहत्यग्निः
॥ ४२२ ॥ सौभरिर्बृहत्यग्निः

॥ ४१७ ॥ उपस्थानमां.
॥ ४१८ ॥ नवग्रहमां ( शनिनो ) होमप्रकरणमां. तर्पणमां. मूळशांतिमा- होम
॥ ४१९ ॥ एकाग्रशन्यासमां. [ मां. वास्तुमां. मार्जनमां. कौतुकबंध-
॥ ४२० ॥ होमप्रकरणमां. नवग्रहमां. ( बुधनो ) तर्पणमां. [ नमां. मध्या-
॥ ४२१ ॥ होमप्रकरणमां. [ न्हमां.
॥ ४२२ ॥ मंडलमां.

तामिंद्रोजनानाम् ॥ मघोनेपात्राप्रथमान्यस्मैप्रस्तोमायंत्वग्नये ॥ १० ॥ २५ ॥ इति चतुर्थी दशती ॥४॥

॥ इतिश्री मंत्रसंहितायांछंदस्यार्चिकेप्रथमस्यार्द्धः प्रपाठकः ॥ * अथ षष्ठी दशती प्रारम्भ ॥

॥ ४२१ ॥ ऊर्द्धऊषुणऊतयेतिष्ठादेवोनसविता ॥ ऊर्द्धोवाजस्यसनितायदंजिभिर्वाघद्भिर्विह्वयामहे ॥ ३ ॥ १ ॥ ॥ इति षष्ठी दशती ॥ ६ ॥ अथ सप्तमी दशती प्रारम्भ ॥ ॥ ४२४ ॥ आजुहोताहविषामर्जयध्वंनिहोतारंगृहपतिंदधिध्वं ॥ इडस्पदेनमसारातहव्यꣳसपर्यतायजतंपस्त्यानाम् ॥ १ ॥ २ ॥ ॥ ॥ ४२५ ॥ चित्रइच्छिशोस्तरुणस्यवक्षथानयोमातरावन्वेतिधातवे ॥ अनुधायदजीजनदधाचिदाववक्षत्सद्योमहिदूत्यꣳचरन् ॥ २ ॥ ३ ॥ ॥ ४२६ ॥ इमꣳस्तोममर्हतेजातवेदसेरथमिवसंम

| | |
|---|---|
| ॥ ४२२ ॥ कण्वाघृद्रतीपुत्रा | ॥ ४२३ ॥ रक्षाहोमसमां |
| ॥ ४२४ ॥ दयापाश्यविश्वद्भावाप्रिः | ॥ ४२४ ॥ उपाकर्ममां. |
| ॥ ४२५ ॥ उपस्तुतोजगत्याग्नि | ॥ ४२५ ॥ होमप्रकरणमां उपाकर्ममां |
| ॥ ४२६ ॥ कुत्सोजगत्याग्नि | ॥ ४२६ ॥ मंडपमां होमप्रकरणमां. |

* आ छर्राबिंदुनो मदद जे दशतीमां मळी आवेला छे ते दशती लख्यो छे सीवायनो रखेल नथी

हेमामनीषया ॥ भद्राहिनःप्रमतिरस्यसंᳲ सद्यग्नेसख्येमारिषामावयंतव ॥ ४ ॥ ४ ॥ ॥ ४२७ ॥ आवोराजानमध्वरस्यरुद्रᳲ होतारᳲ सत्ययजᳲ रोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वं ॥ ७ ॥ ५ ॥ ॥ इति सप्तमी दशोती ॥ ७ ॥ अथाष्टमी दशोती प्रारंभः ॥ ॥ ४२८ ॥ शुक्रंतेअन्यद्यजतंतेअन्यद्विषुरूपेअहनीद्यौरिवासि ॥ विश्वाहिमायाअवसिस्वधावन्भद्रातेपूषन्निहरातिरस्तु ॥ ३ ॥ ६ ॥ ॥ ४२९ ॥ अरण्योर्निहितोजातवेदागर्भइवेत्सुभृतोगर्भिणीभिः ॥ दिवेदिवईड्योजागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ ७ ॥ ७ ॥ ॥ इत्यष्टमी दशोती ॥ ८ ॥ अथ नवमी दशोती प्रारंभः ॥ ॥ ॥ ४३० ॥ अग्नओजिष्ठमाभरद्युम्नमस्मभ्यमध्रिगो ॥ प्रनोरायेपनीयसेरत्सिवाजायपंथाम् ॥ १ ॥ ॥ ८ ॥ ॥ इति नवमी दशोती ॥ ९ ॥ अथ दशमी दशोती प्रारंभः ॥ ॥ ४३१ ॥ सोमᳲ राजानंवरुणमग्निम-

| | |
|---|---|
| ॥ ४२७ ॥ वामदेवस्त्रिष्टुप्रुद्रः | ॥ ४२७ ॥ रुद्रपूजनमां. होमप्रकरणमां. मंडलमां. |
| ॥ ४२८ ॥ भरद्वाजस्त्रिष्टुप्पूषाः | ॥ ४२८ ॥ वास्तुमां. नवग्रहमां. ( शुक्रनो ) तर्पणमां. होमप्रकरणमां. पंच- |
| ॥ ४२९ ॥ विश्वामित्रस्त्रिष्टुबग्निः | ॥ ४२९ ॥ आधाननाहोममां. [ शांतिमां. वृषोत्सर्गमां. |
| ॥ ४३० ॥ गयोनुष्टुबग्निः | ॥ ४३० ॥ उपाकर्ममां. |
| ॥ ४३१ ॥ अग्निरनुष्टुप्सोमः वरुणाग्न्यादित्यविष्णुब्रह्मबृहस्पतयविश्वेदेवावा | ॥ ४३१ ॥ मातृस्थापनमां. वृषोत्सर्गन्यासमां. वसोर्धारामां. उपाकर्ममां. |

न्वारभामहे ॥ आदित्यांविष्णुंसूर्यंब्रह्माणंचबृहस्पतिं ॥ १ ॥ ९ ॥ ॥ इति दशमी दशेती ॥ १० ॥

॥ इतिश्री मंत्रसंहितायां छंदस्यार्चिके प्रथमः प्रपाठकः ॥ ॥ अथ द्वितीयः प्रपाठकः प्रारंभः ॥ ॥ अथ प्रथमा दशेती प्रारंभः ॥ ॥ ४३२ ॥ पुरुत्वादाशिवाह्वोचोरियेतवस्विदा॥ तोदस्येवशरणआमहस्य ॥ १ ॥ १ ॥ ॥ ४३३ ॥ उतस्यानोदिवामतिरदितिरूत्यागमत् ॥ सा शंतातामयस्करदपस्रिधः ॥ ६ ॥ २ ॥ ॥ इति प्रथमा दशेती ॥ १ ॥ अथ तृतीया दशेती प्रारंभः ॥ ॥ ४३४ ॥ इदंवसोसुतमंधःपिबासुपूर्णमुदरं ॥ अनाभयिन्ररिमाते ॥ १० ॥ ३ ॥ इति तृतीया दशेती ॥ ३ ॥ अथ चतुर्थी दशेती प्रारंभः ॥ ॥ ४३५ ॥ अपिबत्कद्रुवःसुतमिंद्रःसहस्रबाह्वे ॥ तत्राददिष्टपौंस्यं ॥ ७ ॥ ४ ॥ ॥ इति चतुर्थी दशेती ॥ ४ ॥ ॥ इतिश्री मंत्रसंहितायां छंदस्यार्चिके द्वितीयस्यार्द्धः प्रपाठकः ॥ ॥ अथ सप्तमी दशेती प्रारंभः ॥ ॥ ४३६ ॥ अयंतइंद्रसोमोनिपूतोअधि

॥ ४३२ ॥ शंयुर्बार्हस्पत्यऋषिःपुरउष्णिगग्निः.
॥ ४३३ ॥ इरिंबिठिकाण्वऋषिःग्निरादित्यौ.
॥ ४३४ ॥ प्रियमेधागायत्रींद्रः
॥ ४३५ ॥ विश्वामित्रोगायत्रींद्रः
॥ ४३६ ॥ इरिंबिठिर्गायत्रींद्रः

॥ ४३२ ॥ उपाकर्मणिवां
॥ ४३३ ॥ वास्तुमां.
॥ ४३४ ॥ पंचकशांतिमां.
॥ ४३५ ॥ वास्तुमां.
॥ ४३६ ॥ सन्यस्तमां.

व्रहिंषि ॥ एहीमस्यन्द्रवापिच ॥ ५ ॥ १ ॥ ॥ इति सप्तमी दशोती ॥ ७ ॥ अथाष्टमी दशोती प्रारंभः ॥ ॥

॥ ४३७ ॥ आतूनइंद्रक्षुमंतंचित्रंग्राभंद्बृसंगृभाय ॥ महाहस्तीदक्षिणेन ॥ ३ ॥ २ ॥ ॥ ४३८ ॥ स

दसस्पातिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामयासिषं ॥ ७ ॥ ३ ॥ ॥ इत्यष्टमी दशोती ॥ ८ ॥ अथ न-

वमी दशोती प्रारंभ ॥ ॥ ४३९ ॥ एषोउषाअपूर्व्याव्युछतिप्रियादिवः ॥ स्तुषेवामश्विनाबृहत् ॥ ४ ॥

॥ ४ ॥ ॥ ४४० ॥ वातआवातुभेषजंशंभुमयोभुनोहृदे ॥ प्रनआयूंषितारिषत् ॥ १० ॥ ५॥

॥ इति नवमी दशोती ॥ ९ ॥ अथ दशमी दशोती प्रारंभः ॥ ॥ ४४१ ॥ पावकानःसरस्वतीवाजेभिर्वाजिनीवती

॥ यज्ञंवष्टुधियावसुः ॥ ५ ॥ ६ ॥ ॥ इति दशमी दशोती ॥ १० ॥ ॥ इतिश्री मंत्रसंहितायांछंद

| | |
|---|---|
| ॥ ४३७ ॥ श्रुसीदिर्गायत्रोमजापतिरिंद्रः<br>॥ ४३८ ॥ मेधातिथिर्गायत्रीसदसस्पतिः<br>॥ ४३९ ॥ प्रस्कण्वोगायत्र्याश्विनी.<br>॥ ४४० ॥ उलोगायत्रीवायु.<br>॥ ४४१ ॥ मधुछंदागायत्रीसरस्वती. | ॥ ४३७ ॥ बलिदानमां. गणपतिपूजनमां. होमप्रकरणमां. होममां. मंडलमां.<br>॥ ४३८ ॥ उपनयनमां. जातकर्ममां.<br>॥ ४३९ ॥ मंडलमां. होमप्रकरणमां. [ होमप्रकरणमां. सन्यस्तमां.<br>॥ ४४० ॥ बलिदानमां. स्वजापताकामां. संपुटीकरणमां. वास्तुमां. मंडलमां.<br>॥ ४४१ ॥ होमप्रकरणमां माध्यान्हिकमां. संपुटीकरणमां. वास्तुमां. मंडलमां. सन्यस्तमां. पंचकशांतिमां. बलिदानमां. |

स्यार्चिके द्वितीयः प्रपाठकः ॥ २ ॥ अथ तृतीयः प्रपाठकः प्रारंभः ॥ अथ प्रथमा दशति प्रारंभः ॥

॥ ४४२ ॥ नकिंइंद्रत्वदुत्तरंनज्यायोअस्तिवृत्रहन् ॥ नक्येवंयथात्वं ॥ १० ॥ ७ ॥ ॥ इति प्रथमा दशती ॥ १ ॥ अथ द्वितीया दशती प्रारंभः ॥

॥ ४४३ ॥ धानावंतंकरंभिणमपूपवंतमुक्थिनं ॥ इंद्रप्रातर्जुषस्वनः ॥ ७ ॥ ८ ॥ ॥ इति द्वितीया दशती ॥ २ ॥ अथ तृतीया दशती प्रारंभः ॥

॥ ४४४ ॥ ऋजुनीतीनोवरुणोमित्रोनयतिविद्वान् ॥ अर्यमादेवैःसजोषाः ॥ ५ ॥ ९ ॥ ॥ इति तृतीया दशती ॥ ३ ॥

॥ इतिश्री मंत्रसंहितायांछंदस्यार्चिके तृतीयस्यार्द्धः प्रपाठकः ॥ ॥ अथ षष्ठी दशती प्रारंभः ॥

॥ ॥ ४४५ ॥ यऋतेचिदभिश्रिषःपुराजत्रुभ्यआतृदः ॥ संधातासंधिंमघवापुरूवसुर्निष्कर्ताविह्रुतं पुनः ॥ २ ॥ १ ॥

॥ ४४६ ॥ आमंद्रैरिंद्रहरिभिर्याहिमयूररोमभिः ॥ मात्वाकेचिन्नियेमुरिन्नपा-

| | |
|---|---|
| ॥ ४४२ ॥ पामदेवोगायत्रींद्रोप्रभहा. | ॥ ४४२ ॥ मार्जनमां. होमप्रकरणमां. माध्यान्हिकमां. |
| ॥ ४४३ ॥ विश्वामित्रोगायत्र्याद्रः | ॥ ४४३ ॥ उपाकर्ममां. लक्षहोममां. |
| ॥ ४४४ ॥ गोतमोगायत्रीवरुणमित्रार्यमाणः | ॥ ४४४ ॥ न्यायाग्निहोत्रमां. |
| ॥ ४४५ ॥ मेधातिथिबृहतींद्रः | ॥ ४४५ ॥ विवाहादिमां. ( परकन्याने घेर लेआवती वखते भणवानुं ) |
| ॥ ४४६ ॥ विश्वामित्रोबृहतींद्रः | ॥ ४४६ ॥ मडलमां. होमप्रकरणमां. |

शिनेतिथन्वेवताꣳ इहि ॥ ९ ॥ २ ॥ ॥ ४४७ ॥ इंद्रमिद्देवतातयइंद्रंप्रयत्यध्वरे ॥ इंद्रꣳ समीके वनिनोहवामहइंद्रंधनस्यसातये ॥ ७ ॥ ३ ॥ ॥ ४४८ ॥ यथागौरोअपाकृतंत्रिष्यन्नेत्यवेरिणम् ॥ आपित्वेनःप्रपित्वेतूयमागहिकण्वेषुसुसचापिब ॥ १० ॥ ४ ॥ इति षष्ठी दशति ॥ ६ ॥ अथ सप्तमी दशतो प्रारंभः ॥ ॥ ४४९ ॥ प्रमित्रायप्रार्यम्णेसचथ्यमृतावसो ॥ वरूथ्येꣳवरुणेछंद्यंवचःस्तोत्रꣳ राजसुगायत ॥ ३ ॥ ५ ॥ ॥ इति सप्तमी दशती ॥ ७ ॥ अथाष्टमी दशती प्रारंभ ॥ ॥ ४५० ॥ सत्यामिथ्यावृपेदसितुवज्जातिर्नोविता ॥ वृषात्युग्रशृण्विषेपरावतिवृषोअर्वावतिश्रुतः ॥ १ ॥ ६ ॥ ॥ ४५१ ॥ अभियावीरमंधसोमदेषुगायगिरामहाविचेतस ॥ इंद्रंनामश्रुत्यꣳ शाकिनंवचोयथा ॥ ३ ॥ ७ ॥ ॥

॥ ४४७ ॥ मेधातिथिर्बृहतींद्रः
॥ ४४८ ॥ देवातिथिर्बृहतींद्रः.
॥ ४४९ ॥ जमदग्निर्बृहतींद्रवरुणामित्रोऽर्यमादित्योविश्वेदेवावाया
॥ ४५० ॥ मेधातिथिर्बृहतींद्रः [ तींद्र
॥ ४५१ ॥ यद्वा पिपीलिकमध्याविराड्बृह

॥ ४४७ ॥ होमप्रकरणमा.
॥ ४४८ ॥ वास्तूमां.
॥ ४४९ ॥ वास्तूमां.
॥ ४५० ॥ वास्तूमां.
॥ ४५१ ॥ मूळविधानसां.

॥ ॥ ४५२ ॥ तवेदिंद्रावमंवसुत्वंपुष्यसिमध्यमं ॥ सत्राविश्वस्यपरमस्यराजसिनकिष्ट्वागोषुवृण्वते ॥ ८ ॥ ८ ॥ ॥ इत्यष्टमी दशती ॥ ८ ॥ अथ नवमी दशती प्रारंभः ॥ ॥ ४५३ ॥ यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवंछग्धितवतन्नऊतयेविद्विषोविमृधोजहि ॥ २ ॥ ९ ॥ ॥ ४५४ ॥ वास्तोष्पते ध्रुवास्थूणाꣳसत्रꣳसोम्यानां ॥ द्रप्सःपुरांभेत्ताशश्वतीनामिंद्रोमुनीनाꣳसखा ॥ ३ ॥ १० ॥ ॥ ॥ ॥ ४५५ ॥ बण्महाꣳअसिसूर्यबडादित्यमहाꣳअसि ॥ महस्तेसतोमहिमापनिष्टममन्हादेवमहाꣳअसि ॥ ४ ॥ ११ ॥ ॥ इति नवमीदशती ॥ ९ ॥ अथ दशमी दशती प्रारंभः ॥ ॥ ४५६ ॥ यदाकदाचमीढुषेस्तोताजरेतमर्त्यः ॥ आदिद्वंदेतवरुणंविपागिराधर्त्तारंविव्रतानाम् ॥ ६ ॥ १२ ॥ ॥ इतिदशमीदशती ॥ १० ॥ इतिश्री मंत्रसंहितायांछंदस्यार्चिकेतृतीयः प्रपाठकः ॥ ३ ॥ अथ

॥ ४५२ ॥ वसिष्ठोबृहतींद्रः
॥ ४५३ ॥ भर्गोबृहतींद्रः
॥ ४५४ ॥ इरिंबिठिरनुष्टुब्वास्तु
॥ ४५५ ॥ जमदग्निर्बृहतीसूर्यः
॥ ४५६ ॥ सप्तोबृहतीवरुणः

॥ ४५२ ॥ होममां.
॥ ४५३ ॥ मूलविधानमां.
॥ ४५४ ॥ वास्तुमां. बलिदानमां आग्रायणमां.
॥ ४५५ ॥ नवग्रहमां. ( सूर्यनो ) तर्पणमां. होमप्रकरणमां. वास्तुमां.
॥ ४५६ ॥ सन्यस्तमां. पंचकशांतिमां. होमप्रकरणमां. कलशस्थापनमां. मंडल-[मां वास्तुमां. संपुटीकरणमां. बलिदानमां.

चतुर्थः प्रपाठकः प्रारंभः ॥ ॥ अथ प्रथमा दशती प्रारंभः ॥ ॥ ४५७ ॥ त्वष्टानोदैव्यंवचःपर्जन्यो
ब्रह्मणस्पतिः ॥ पुत्रैर्भ्रातृभिरदितिर्नुपातुनोदुष्टरंत्रामणंवचः ॥ ७ ॥ १ ॥ ॥ इति प्रथमा दशती ॥ १ ॥
॥ अथ तृतीया दशती प्रारंभः ॥ ॥ ४५८ ॥ इंद्रन्नरोनेमधिताहवंतेयत्पार्यायुनजतेधियस्ताः ॥ शूरोनृषा
ताश्रवसश्चकामआगोमतिव्रजेभजात्वन्नः ॥ ६ ॥ २ ॥ ॥ ४५९ ॥ नाकेसुपर्णमुपयत्पतंतंहृदावे
नंतोअभ्यचक्षतत्वा ॥ हिरण्यपक्षंवरुणस्यदूतंयमस्ययोनौशकुनंभुरण्युं ॥ ८ ॥ ३ ॥ ॥ ४६० ॥ ब्र
ह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्च
विवः ॥ ९ ॥ ४ ॥ ॥ इति तृतीया दशती ॥ ३ ॥ अथ चतुर्थी दशती प्रारंभः ॥ ॥ ४६१ ॥ प्रवोमहेमहेवृधेभर
ध्वंप्रचेतसेप्रसुमतिंकृणुध्वं ॥ विशःपूर्वीःप्रचरचर्षणिप्राः ॥ ६ ॥ ५ ॥ ॥ ४६२ ॥ चक्रंयदस्याप्स्वानि

॥ ४५७ ॥ त्वष्टाबृहस्पतिःपर्जन्यब्रह्मणस्पत्यादि [ त्वयाविदवेवेवावा.
॥ ४५८ ॥ वामदेवस्त्रिष्टुबिंद्रः
॥ ४५९ ॥ वेनस्त्रिष्टुब्वेनयमवरुणाः
॥ ४६० ॥ ब्रह्मणस्पतिस्त्रिष्टुब्बृहस्पतिर्ब्रह्मा
॥ ४६१ ॥ वसिष्ठोविराडिंद्रः [ वि
॥ ४६२ ॥ गोतोपिनीविराडिंद्र-

॥ ४५७ ॥ बलिदानमां.
॥ ४५८ ॥ वास्तुमां. [ पुष्टीकरणमां. ध्वजापताकामां. होमप्रकरणमां.
॥ ४५९ ॥ बृहस्पतिशांतिमां. मन्यक्तमां. बलिदानमां. मडलमां. वास्तुमां. स-
॥ ४६० ॥ वास्तुमां. होमप्रकरणमां. ध्वजापताकामां. कुडपूजनमां. मडलमां.
॥ ४६१ ॥ मूर्तिविधानमां. [ आधानमां.
॥ ४६२ ॥ दशविधिस्नानमां. ( दुधनुं ) वास्तुमां.

पत्तमुतोतदस्समध्विश्वछ्यात् ॥ पृथिव्यामतिपितंयदूधःपयोगोष्वदधाओषधीषु ॥ ९ ॥ ६ ॥ ॥
॥ इति चतुर्थी दशति ॥ ४ ॥ अथ पंचमी दशति प्रारंभः ॥ ॥ ४६३ ॥ त्यमूषुवाजिनंदेवजूतꣳसहोवानंतरु
तारꣳरथानाम् ॥ अरिष्टनेमिंपृतनाजमाशुꣳस्वस्तयेतार्क्ष्यमिहाहुवेम ॥ १ ॥ ७ ॥ ॥ ४६४ ॥ त्रा
तारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रम् ॥ हुवेनुशक्रंपुरुहूतमिंद्रमिदꣳहविर्मघवावेत्विंद्रः
॥ २ ॥ ८ ॥ ॥ ४६५ ॥ इंद्रापर्वताबृहतारथेनवामीरिषआवहतꣳसुवीराः ॥ वीतꣳहव्यान्यध्व
रेषुदेवावर्द्धेथांगीर्भिरिडयामदंता ॥ ७ ॥ ९ ॥ ॥ इति पंचमी दशति ॥ ५ ॥ ॥ इतिश्री मंत्रसं
हितायां छंदस्यार्चिके चतुर्थस्यार्द्धः प्रपाठकः ॥ ॥ अथ षष्ठी दशति प्रारंभः ॥ ॥ ४६६ ॥ ए-
तोन्विंद्रꣳस्तवामशुद्धꣳशुद्धेनसाम्ना ॥ शुद्धैरुक्थैर्वावृध्वाꣳसꣳशुद्धैराशीर्वान्ममत्तु ॥ ९ ॥ १० ॥

॥ ४६३ ॥ तार्क्ष्यस्त्रिष्टुप्तार्क्ष्यः सुपर्णो वा.
॥ ४६४ ॥ गर्गस्त्रिष्टुबिंद्रः
॥ ४६५ ॥ विश्वामित्रस्त्रिष्टुबिंद्रापर्वतौ.
॥ ४६६ ॥ तिरश्च्यनुष्टुबिंद्रः

॥ ४६३ ॥ नांदीश्राद्धमां.
॥ ४६४ ॥ ध्वजापताकामां. होमप्रकरणमां. बलिदानमां. मंडलमां. संपुटीकरणमां. अभिषेकमां.
॥ ४६५ ॥ यूपोत्सर्गन्यासमां.
॥ ४६६ ॥ माध्यान्हिक ( स्नानविधिना मार्जन ) मां. महालयश्राद्धमां.

॥ इति षष्ठी दशती ॥ ६ ॥ अथ सप्तमी दशती प्रारंभ ॥ ॥ ४६७ ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजि
नः ॥ सुरभिनोमुखाकरत्प्रनआयूꣳषितारिषत् ॥ ७ ॥ १ ॥ ॥इति सप्तमी दशती ॥ ७ ॥ अथाष्टमी दश
तीप्रारंभ ॥ ॥ ४६८ ॥ अर्चतप्रार्चतानरःप्रियमेधासोअर्चत ॥ अर्चन्तुपुत्रकाउतपुरंनधृष्ण्वर्चत ॥ ३ ॥
॥ २ ॥ ॥ इत्यष्टमी दशती ॥ ८ ॥ अथ नवमी दशती प्रारंभः ॥ ४६९ ॥ घृतवतीभुवनानामभिश्रियोर्वी
पृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्मणाविष्कभितेअजरेभूरिरेतसा ॥ ९ ॥ ३ ॥ ॥
॥ ४७० ॥ उभेयदिन्द्ररोदसीआपप्राथोषाइव ॥ महान्तंत्वामहीनाꣳसम्राजंचर्षणीनाम् ॥ देवीजनि
त्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ १० ॥ ४ ॥ ॥ रावे नवमी दशती ॥ ९ ॥ ॥ ॥ इतिश्री मं-
त्रसंहितायां छंदस्यार्चिके चतुर्थः प्रपाठकः ॥ ४ ॥ अथ पंचमः प्रपाठकः प्रारंभः ॥

| | |
|---|---|
| ॥ ४६७ ॥ वामदेवोनुष्टुब्दधिक्रि | ॥ ४६७ ॥ दशविधिस्नानमा उपाकर्ममां. ( दधिनो ) धाम्दमा आधानमां. |
| ॥ ४६८ ॥ प्रियमेधानुष्टुबिन्द्रः | ॥ ४६८ ॥ गाय्र ( च्यवन करवा ) मा [ लक्षहोममा देहशुद्धिमा |
| ॥ ४६९ ॥ भरद्वाजोजगतीद्यावापृथिवीयक | ॥ ४६९ ॥ देहशुद्धिमा माध्यान्हिकमा. वास्तुमा दशविधिस्नानमा पचासु- |
| ॥ ४७० ॥ मधाताजगतींद्रः [ गोवा. | ॥ ४७० ॥ मंडपस्थापनमा लक्षहोममां [ तमा ( बीजो ) आधानमां. |

॥ अथ प्रथमा दशेती प्रारभः ॥ ४७१ ॥ तुचेतुनायतत्सुनोद्राघीयआयुर्जीवसे ॥ आदित्यासःसमहसःकृणोतन ॥ ५ ॥ १ ॥ ॥ ४७२ ॥ वेत्थाहिनिर्ऋतीनांवज्रहस्तपरिवृजं ॥ अहरहःशुंध्युःपरिपदामिव ॥ ६ ॥ २ ॥ ॥ इति प्रथमा दशेती ॥ १ ॥ अथ द्वितीया दशेती प्रारभः ॥ ॥ ४७३ ॥ गावश्चिद्घासमन्यवःसजात्येनमरुतःसबंधवः ॥ रिहतेककुभोमिथः ॥ ६ ॥ ३ ॥ ॥ इति द्वितीया दशेती ॥ २ ॥ अथ तृतीया दशेती प्रारभः ॥ ॥ ४७४ ॥ स्वादोरित्थाविषूवतोमधोःपिबंतिगौर्यः ॥ याइंद्रेणसयावरीर्वृष्णामदंतिशोभथावस्वीरनुस्वराज्यम् ॥ १ ॥ ४ ॥ ॥ ४७५ ॥ अक्षन्नमीमदंतह्यवप्रियाअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्टयामतीयोजान्विंद्रतेहरी ॥ ७ ॥ ५ ॥ ॥ इति तृतीया दशेती ॥ ३ ॥

## ॥ इतिश्री मंत्रसंहितायांछंदस्यार्चिकेपंचमस्यार्धः प्रपाठकः ॥

॥ अथ षष्ठी दशेती प्रारंभः ॥

| | |
|---|---|
| ॥ ४७१ ॥ इंद्रविनिर्ऋतिगायत्रीआदित्य | ॥ ४७१ ॥ मूळविधानमां. |
| ॥ ४७२ ॥ ज्ञदवमनाउष्णिगिंद्र | ॥ ४७२ ॥ बृहस्पतिशांतिमां. न्यस्तमां. बलिदानमां. मडळमां. संपुटीकरणमां. ध्वजापताकामां. होमप्रकरणमां. |
| ॥ ४७३ ॥ सोभरिःककुबुष्णिङ्मरुतः | ॥ ४७३ ॥ वास्तूमां. माध्यान्हिकमां. देहशुद्धिमां. दशविधिस्नानमां. |
| ॥ ४७४ ॥ गोतम पथ्यापंक्तिरिंद्र | ॥ ४७४ ॥ उपाकर्ममां. |
| ॥ ४७५ ॥ गोतम पंक्तिरिंद्रःपितरोवा | ॥ ४७५ ॥ उपाकर्ममां ( अक्षतदानमां ) |

॥ ॥ ४७६ ॥ उपप्रक्षेमधुमातिक्षियंतःपुष्येमरायेंधीमहेतइंद्र ॥ ८ ॥ १ ॥ ॥ इति षष्ठी दशोती ॥ ६ ॥

॥ सप्तमी दशोती प्रारंभ ॥ ॥ ४७७ ॥ त्रिकद्रुकेषुमहिषोयवाशिरंतविशुष्मास्तृपत्सोममपिबद्विष्णुना

सुतंयथावशं ॥ सईममादमहिकर्मकर्तवेमहामुरुं सैनं सश्चद्देवोदेवं सत्यइंद्रुःस्त्यमिंद्रं ॥ १ ॥

॥ २ ॥ ॥ ४७८ ॥ अस्तुश्रौषट्पुरोअग्निंधियादधआनुत्यच्छर्धोदिव्यंवृणीमहइंद्रवायूवृणीमहे ॥ य

द्धक्राणाविवस्वतेनाभासंदायनव्यसे ॥ अधप्रनूनमुपयंतिधीतयोदेवाँ अच्छानधीतयः ॥ ५ ॥ ३ ॥

॥ ४७९ ॥ प्रगोमहेमतयोयंतुविष्णवेमरुत्वतेगिरिजाएवयामरुत् ॥ प्रशर्धायप्रयज्यवेसुखादयेतवसे

भंदद्दिष्टयेधुनिव्रतायशवसे ॥ ६ ॥ ४ ॥ ॥ ४८० ॥ अभित्यंदेवं सवितारमोण्योःकविक्रतुमर्चा

मिसत्यसवं रत्नधामभिप्रियंमतिं ॥ ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीत

| | |
|---|---|
| ॥ ४७६ ॥ मधुछंदाश्चिष्टुम्मरुतः | ॥ ४७६ ॥ मंडलमां. |
| ॥ ४७७ ॥ गृत्समदोत्यष्टिर्विष्णुः | ॥ ४७७ ॥ उपाकर्मणि. |
| ॥ ४७८ ॥ परुच्छेपोत्यष्टिरिंद्रः | ॥ ४७८ ॥ उपाकर्मणि. |
| ॥ ४७९ ॥ एवयामरुदातिजगतींद्रोविष्णुर्वा. | ॥ ४७९ ॥ उपाकर्मणि. |
| ॥ ४८० ॥ नकुलोष्टिः सविता, | ॥ ४८० ॥ मूळविधानमा, वास्तुमां, मंडलमां, |

सुक्रतु॰रूपास्व॰ ॥ ८ ॥ ५ ॥ ॥ ४८१ ॥ अग्निंहोतारंमन्येदास्वंतंवसो सूनु॒सहसोजातवेदसंविप्रं नजातवेदसं ॥ यऊर्ध्वयास्वध्वरोदेवोदेवाच्याकृपा ॥ घृतस्यविभ्राष्टिमनुशुक्रशोचिषआजुव्हानस्य सर्पिषः ॥ ९ ॥ ६ ॥ ॥ ४८२ ॥ तवत्यन्नर्यंनृतोपइंद्रप्रथमंपूर्व्यंदिविप्रवाच्यंकृतं ॥ योदेवस्यशव साप्रारिणाअसुरिणनप ॥ भुवोविश्वमभ्यदेवमोजसाविदेदूर्ज॒शतक्रतुविदेदिषम् ॥ १० ॥ ७ ॥

॥ इत्यष्टमी दशेती ॥ ८ ॥ अथ नवमा दशती प्रारंभ ॥ ॥ ४८३ ॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इंद्रायपातवेसुतः ॥ २ ॥ ८ ॥ ॥ ४८४ ॥ इंद्रायेदोमरुत्वतेपवस्वमधुमत्तमः ॥ अर्कस्ययोनिमासदं ॥ ६ ॥ ९ ॥ ॥ इति नवमा दशेती ॥ ९ ॥ अथ दशामी दशेती प्रारंभ ॥ ॥ ४८५ ॥ वृषाह्यसिभानुनाद्युमंतंत्वाहवामहे ॥ पवमानस्वर्दृशम् ॥ ४ ॥ १० ॥ ॥ इति दशामी दशेती ॥ १० ॥ ॥ इतिश्री मंत्रसं

| | |
|---|---|
| ॥ ४८१ ॥ पयछेपोत्याहिरग्नि | ॥ ४८१ ॥ होममो |
| ॥ ४८२ ॥ गृत्समदोस्यमिंद्र | ॥ ४८२ ॥ उपाकर्ममा |
| ॥ ४८३ ॥ मधुछंदागायत्रीसोमेंद्रौ | ॥ ४८३ ॥ एकादशान्यासमा |
| ॥ ४८४ ॥ कुत्सोगायत्रींद्रसोमौ | ॥ ४८४ ॥ होमप्रकरणमा मूलविधानमा |
| ॥ ४८० ॥ नमरग्निगायत्रीसोम | ॥ ४८५ ॥ वृषोत्सर्गन्यासमा |

हितायां छंदस्यार्चिके पंचमः प्रपाठकः ॥ ३ ॥ अथ षष्ठः प्रपाठकः प्रारंभः ॥

॥ अथ प्रथमा दशती प्रारंभः ॥ ॥ ४८६ ॥ आविशन्कलशꣳ सुतोविश्वाअर्षन्नभिश्रियः ॥ इंदुरिंद्रायधीयते ॥ ३ ॥ १ ॥ ॥ इति प्रथमा दशती ॥ १ ॥ अथ द्वितीया दशती प्रारंभः ॥ ॥ ४८७ ॥ आतेदक्षंमयोभुवंवन्हिमद्यावृणीमहे ॥ पान्तमापुरुस्पृहं ॥ २ ॥ १ ॥ ॥ ४८८ ॥ तरत्समंदीधावतिधारासुतस्यान्धसः ॥ तरत्समंदीधावति ॥ ४ ॥ २ ॥ ॥ इति द्वितीया दशती ॥ २ ॥ अथ तृतीया दशती प्रारंभः ॥ ॥ ४८९ ॥ तवाहꣳसोमरारणसख्यइंदोदिवेदिवे ॥ पुरूणिबभ्रोनिचरंतिमामवपरिधीꣳरतितांꣳइहि ॥ ६ ॥ ॥ ३ ॥ इति तृतीया दशती ॥ ३ ॥ अथ चतुर्थी दशती प्रारंभः ॥ ॥ ४९० ॥ सोमःपवतेजनीतामतीनांजनिताद्विवोजनितापृथिव्याः ॥ जनिताग्नेर्जनितासूर्यस्यजनितेंद्रस्यजनितोतविष्णोः ॥ ५ ॥ ४ ॥ इति

| | |
|---|---|
| ॥ ४८६ ॥ असितोगायत्रींद्रः | ॥ ४४६ ॥ कलशस्थापनमां. |
| ॥ ४८७ ॥ जमदग्निर्गायत्रीसोमः | ॥ ४८७ ॥ मडलमां. |
| ॥ ४८८ ॥ अवत्सारोगायत्रीसोमः | ॥ ४८८ ॥ माध्यान्हिक ( स्नानविधिना मार्जन ) मां. |
| ॥ ४८९ ॥ सप्तऋषयोबृहतीसोमः | ॥ ४८९ ॥ होमप्रकरणमां. संपुटीकरणमां. मडलमां. संन्यस्तमां. बलिदानमां. |
| ॥ ४९० ॥ प्रतर्दनास्त्रिष्टुप्सोमः | ॥ ४९० ॥ नारायणबलिमां. [ ध्वजापताकामां. |

॥ ४९६ ॥ परिकोशंमधुश्चुतᳬ सोमःपुनानोअर्षति ॥ अभिवाणीर्ऋषीणाᳬ सप्तानूपत ॥ १२ ॥ ६ ॥

॥ इत्यष्टमी दशती ॥ ८ ॥ अथ नवमी दशती प्रारंभः ॥ ॥ ४९७ ॥ एतमुत्यंमदच्युतᳬ सहस्रधारंवृषभंदिवोदुहं ॥ विश्वावसूनिबिभ्रतम् ॥ ४ ॥ ७ ॥ ॥ ४९८ ॥ यउस्त्रियाअपियाअंतरश्मनिनिर्गाअकृंतदोजसा ॥ अभिव्रजंतत्निषेगव्यमश्व्यंवर्मीवधृष्णवारुज ॥ ३० ॥ वर्मीवधृष्णवारुज ॥ ८ ॥ ८ ॥

॥ इति नवमी दशती ॥ ९ ॥ ॥ इतिश्री मंत्रसंहितायां छंदस्यार्चिके षष्ठः प्रपाठकः ॥ ६ ॥

॥ इतिश्री मंत्रसंहितायां छंदस्यार्चिकं समाप्तम् ॥ ॥ छंदस्यार्चिकस्य मंत्रसंख्यांकाः ॥ १०१ ॥

| | |
|---|---|
| ॥ ४९६ ॥ त्रितउष्णिक्सोमः | ॥ ४९६ ॥ मूल्याविधानेमां. |
| ॥ ४९७ ॥ ऽतयशाःककुबु(ष्णि)क्सोमोवृषभ | ॥ ४९७ ॥ मंडलमां. घसोत्कारामां. मानुष्यायनमां. |
| ॥ ४९८ ॥ ऊत्काककुबुष्णिक्सोमः [ सोमो. | ॥ ४९८ ॥ यास्तुमां. |

श्रीगणेशायनमः

श्रीसामवेदायनमः

# ॥ अथारण्यार्चिकस्य मंत्रसंहितायाः संग्रहः ॥

## ॥ अथ प्रथमा दशोती प्रारंभः ॥

॥ ४९९ ॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय ॥ अथादित्यव्रतेवयंतवानागसोअदितयेस्याम ॥ ४ ॥ १ ॥ ॥ ५०० ॥ त्वयावयंपवमानेनसोमभरेकृतंविचिनुयामशश्वत् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ ५ ॥ २ ॥ ॥ ५०१ ॥ अहमस्मिप्रथमजाऋ

॥ ४९९ ॥ शुन शेपस्त्रिष्टुप्वरुणादित्यौ.
॥ ५०० ॥ कुत्सस्त्रिष्टुप्सोमामित्रावरुणौच दितिःसिंधु पृथिवीद्यौ.
॥ ५०१ ॥ आत्मात्रिष्टुबात्मा

॥ ४९९ माध्यान्दिनकर्मा. मण्डलर्मा होमप्रकरणमां,
॥ ५०० ॥ वास्तुमां.
॥ ५०१ ॥ वास्तुमा ब्रह्मयज्ञकर्मा.

तस्यपूर्वदेवेभ्योअमृतस्यनाम ॥ योमाददातिसइदेवमावदहमन्नमन्नमदंतमद्मि ॥ ९ ॥ ३ ॥ इति
प्रथमा दशती ॥ १ ॥ अथ द्वितीया दशती प्रारम्भः ॥ ॥ ५०२ ॥ त्वमेतदधारयःकृष्णासुरोहिणीषुच ॥ परुष्णी
पुरुशत्पयः ॥ १ ॥ १ ॥ ॥ ५०३ ॥ अरूरुचदुषसःपृश्निरग्रियउक्षामिमेतिभुवनेषुवाजयुः ॥ मा-
यविनोममिरेअस्यमायपानृचक्षसःपितरोगर्भमादधुः ॥ २ ॥ २ ॥ ५०४ ॥ प्रथश्चयस्यसप्रथश्च
नामानुष्टुभस्यहविषोहविर्यत् ॥ धातुर्द्युतानात्सवितुश्चविष्णोरथंतरमाजभारावसिष्ठः ॥ ५ ॥ ३ ॥ इति
द्वितीया दशती ॥ २ ॥ अथ तृतीया दशती प्रारम्भः ॥ ॥ ५०५ ॥ मयिवर्चोअथोयशोथोयज्ञस्ययत्पयः ॥ पर
मेष्ठीप्रजापतिर्दिविद्यामिवदृंहतु ॥ १ ॥ १ ॥ ॥ ५०६ ॥ त्वमिमाओषधीःसोमविश्वास्त्वमपोअ-
जनयस्त्वंगाः ॥ त्वमाततनोरुर्वन्तरिक्षंत्वंज्योतिषावितमोववर्थ ॥ ३ ॥ २ ॥ ॥ ५०७ ॥ अग्निमीडेपुरो

॥ ५०२ ॥ गुरुक्षोगायर्वाद,
॥ ५०३ ॥ गयिलोजगतोसामपितरः
॥ ५०४ ॥ पृतुर्ल्पिन्ष्टुब्धातृमवितृविष्णवः
॥ ५०५ ॥ परमेष्ठीप्रजापतिरनुष्टुप्आर्पानि
॥ ५०६ ॥ गौतमोविराट्सोम.
॥ ५०७ ॥ मधुच्छन्दागायत्र्यग्निः

॥ ५०२ ॥ यास्त्रूमां.
॥ ५०३ ॥ मडलमां. यास्त्रूमां,
॥ ५०४ ॥ नारायणबलिमां. [ नाकमां.
॥ ५०५ ॥ सन्यस्तमां. बलिदानमां. सपुटीकरणमां. होमप्रकरणमां. ब्वजाप-
॥ ५०६ ॥ कलशस्थापनमां. ( औषधीनो. )
॥ ५०७ ॥ अघाज्याहुतोमां.

हितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमम् ॥ ४ ॥ ३ ॥ ॥ ५०८ ॥ समन्यायंत्युपयंत्यन्याःसमा
नमूर्वनद्यस्पृणंति ॥ तमुᳲ शुचिᳲ शुचयोदीदिवाᳲ सेमपान्नपातमुपयंत्यापः ॥ ६ ॥ ४ ॥ ॥ ५०९ ॥
॥ आप्रागाद्भद्रायुवतिरन्हःकेतून्समीर्त्सति ॥ अभूद्भद्रानिवेशनीविश्वस्यजगतोरात्री ॥ ७ ॥ ५ ॥
॥ ५१० ॥ प्रक्षस्यवृष्णोअरुषस्यनूमहःप्रनोवचोविदथाजातवेदसे ॥ वैश्वानरायमतिर्नव्यसेशुचिःसो
मइवपवतेचारुरग्नये ॥ ८ ॥ ६ ॥ ॥ ५११ ॥ विश्वेदेवाममश्रृण्वंतुयज्ञमुभेरोदसीअपान्नपाञ्चमन्म
॥ मावोवचाᳲसिपरिचक्ष्याणिवोचᳲसुम्नेष्विद्वोअंतमामदेम ॥ ९ ॥ ७ ॥ ॥ ५१२ ॥ यशोमा-
द्यावापृथिवीयशोमेंद्रबृहस्पती ॥ यशोभगस्यविंदतुयशोमाप्रतिमुच्यतां ॥ यशस्व्य३स्याःसᳲस
दोहंप्रवदितास्याम् ॥ १० ॥ ८ ॥ इति तृतीया दशती ॥ ३ ॥ अथ चतुर्थी दशती प्रारंभ ॥ ॥ ५१३ ॥ सह

॥ ५०८ ॥ गृत्समदस्त्रिष्टुबापः
॥ ५०९ ॥ अत्रिरनुष्टुब्भारद्वाजी(?)रात्रिरित्यश्व,
॥ ५१० ॥ भरद्वाजोजगतीवैश्वानर
॥ ५११ ॥ ऋजिश्वात्रिष्टुब्विश्वेदेवाः
॥ ५१२ ॥ श्यावाश्वोऽथातिपङ्क्तीजगतीवि
॥ ५१३ ॥ नारायणानुष्टुप्पुरुष [ श्वेदेवाः

॥ ५०८ ॥ आग्रायणकर्मा.
॥ ५०९ ॥ बलिदानकर्मा, कुम्भपूजनकर्मा.
॥ ५१० ॥ वास्तुकर्मा.
॥ ५११ ॥ मङ्गलकर्मा.
॥ ५१२ ॥ होमकर्मा.
॥ ५१३ ॥ होमप्रकरणकर्मा, माध्यान्हिककर्मा. वास्तुकर्मा सामान्यवरि—

स्रशीर्षाः पुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंसर्वतोवृत्वात्यतिष्ठद्दशांगुलम् ॥ ३ ॥ १ ॥ ॥
॥ ५१४ ॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ तथाविष्वङ्व्यक्रामदशनानशनेअभि ॥४॥
॥ २ ॥ ॥ ५१५ ॥ पुरुषएवेदं सर्वंयद्भूतंयच्चभाव्यं ॥ पादोस्यसर्वाभूतानित्रिपादस्यामृतंदिवि ॥
॥ ५ ॥ ३ ॥ ॥ ५१६ ॥ तावानस्यमहिमाततोज्यायाꣳश्चपुरुषः ॥ उतामृतत्वस्येशानोयदन्नेनाति
रोहति ॥ ६ ॥ ४ ॥ ॥ ५१७ ॥ ततोविराडजायतविराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चा
द्भूमिमथोपुरः ॥ ७ ॥ ५ ॥ इति चतुर्थी दशति ॥ ४ ॥ अथ पंचमी दशति प्रारंभः ॥ ॥ ५१८ ॥ विभ्राड्बृ
हत्पिबतुसोम्यंमध्वायुर्दधद्यज्ञपतावविह्रुतं ॥ वातजूतोयोअभिरक्षतित्मनाप्रजाःपिपर्तिबहुधाविरा
जति ॥ २ ॥ १ ॥ ॥ ५१९ ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावा-

| | |
|---|---|
| ॥ ५१४ ॥ नारायणोनुष्टुप्पुरुषः | ॥ ५१४ ॥ नारायणबलिर्मा. |
| ॥ ५१५ ॥ नारायणोनुष्टुप्पुरुषः | ॥ ५१५ ॥ नारायणबलिर्मा. |
| ॥ ५१६ ॥ नारायणोनुष्टुप्पुरुषः | ॥ ५१६ ॥ नारायणबलिर्मा. |
| ॥ ५१७ ॥ नारायणोनुष्टुप्पुरुषः | ॥ ५१७ ॥ नारायणबलिर्मा. |
| ॥ ५१८ ॥ सूर्योजगतीसूर्यः | ॥ ५१८ ॥ मध्यान्हना उपस्थानर्मा. |
| ॥ ५१९ ॥ कुत्सस्त्रिष्टुप्सूर्यः | ॥ ५१९ ॥ मध्यान्हना उपस्थानर्मा. |

पृथिवीअंतरिक्ष सूर्यआत्माजगतस्तस्थुषश्च ॥ ३ ॥ २ ॥ ॥२२॥ ॥ ५२० ॥ आयंगौःपृश्निरक्रमीदसदन्मा
तरंपुरः ॥ पितरंचप्रयंत्स्वः ॥ ४ ॥ ३ ॥ ॥२३॥ ॥ ५२१ ॥ अंतश्चरतिरोचनास्यप्राणादपानती ॥ व्यख्य
न्महिषोदिवं ॥ ५ ॥ ४ ॥ ॥२४॥ ॥ ५२२ ॥ त्रिंशद्धामविराजतिवाक्पतंगायधीयते ॥ प्रतिवस्तोरहद्यु
भिः ॥ ६ ॥ ५ ॥ ॥२५॥ ॥ ५२३ ॥ अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सूरायविश्वचक्षसे ॥ ७ ॥
॥ ६ ॥ ॥२६॥ ॥ ५२४ ॥ अदृश्रन्नस्यकेतवोविरश्मयोजनाँ अनु ॥ भ्राजंतोअग्नयोयथा ॥ ८ ॥ ७ ॥
॥२७॥ ॥ ५२५ ॥ तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनं ॥ ९ ॥ ८ ॥ ॥२८॥ ॥ ५२६ ॥ प्र
त्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ॥ प्रत्यङ्विश्वं स्वर्दृशे ॥ १० ॥ ९ ॥ ॥२९॥ ॥ ५२७ ॥ येनापाव-

| | |
|---|---|
| ॥ ५२० ॥ सर्पोगायत्र्यात्मा. | ॥ ५२० ॥ ध्वजापताकामां. मंडलमां. मध्यान्हना उपस्थानमां. |
| ॥ ५२१ ॥ सर्पोगायत्र्यात्मा. | ॥ ५२१ ॥ मध्यान्हना उपस्थानमां. |
| ॥ ५२२ ॥ सर्पोगायत्र्यात्मा | ॥ ५२२ ॥ ,, उपस्थानमां. |
| ॥ ५२३ ॥ प्रस्कण्वोगायत्रीसूर्यः | ॥ ५२३ ॥ ,, उपस्थानमां. |
| ॥ ५२४ ॥ प्रस्कण्वोगायत्रीसूर्यः | ॥ ५२४ ॥ ,, उपस्थानमां. |
| ॥ ५२५ ॥ प्रस्कण्वोगायत्रीसूर्यः | ॥ ५२५ ॥ ,, उपस्थानमां. |
| ॥ ५२६ ॥ प्रस्कण्वोगायत्रीसूर्यः | ॥ ५२६ ॥ ,, उपस्थानमां. |
| ॥ ५२७ ॥ प्रस्कण्वोगायत्रीसूर्यः | ॥ ५२७ ॥ ,, उपस्थानमां. |

कचक्षसाभुरण्यंतजनाः अनु ॥ त्वंवरुणपश्यसि ॥ ११ ॥ १० ॥ ॥ ५२८ ॥ उद्यामेपिरजःपृथ्व
हामिमानोअक्तुभिः ॥ पश्यंजन्मानिसूर्य ॥ १२ ॥ ११ ॥ ॥ ५२९ ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्य
नप्त्र्यः ॥ ताभिर्यातिस्वयुक्तिभिः ॥ १३ ॥ १२ ॥ ॥ ५३० ॥ सप्तत्वाहरितोरथेवहंतिदेवसूर्य ॥
शोचिष्केशंविचक्षण ॥ १४ ॥ १३ ॥ इति पंचमी दशती ॥ ५ ॥ अथ षष्ठी दशती प्रारंभः ॥ ॥ ५३१ ॥ वि
वामंवतन्विदागातुमनुशंसियोदिशः ॥ शिक्षाशचीनांपतेपूर्वीणांपुरूवसो ॥ १ ॥ १ ॥ ॥ ५३२ ॥ अ
भिद्युम्नभिष्टिभिःस्वऽ३र्नांशुः ॥ प्रचेतनप्रचेतयेंद्रद्युम्नायनइषे ॥ २ ॥ २ ॥ ॥ ५३३ ॥ एवाहिशक्रो
रायेवाजायवज्रिवः ॥ शविष्ठवज्रिन्नृंजसेमंहिष्ठवज्रिन्नृंजसआयाहिपिबमत्स्व ॥ ३ ॥ ३ ॥ ॥

| | |
|---|---|
| ॥ ५२८ ॥ प्रस्कण्वोगायत्रीसूर्यः | ॥ ५२८ ॥ मध्यान्हना उपस्थानमां. |
| ॥ ५२९ ॥ प्रस्कण्वोगायत्रीसूर्यः | ॥ ५२९ ॥ ,, उपस्थानमां. |
| ॥ ५३० ॥ प्रस्कण्वोगायत्रीसूर्यः | ॥ ५३० ॥ ,, उपस्थानमां. |
| ॥ ५३१ ॥ इंद्रोविराडिंद्रः | ॥ ५३१ ॥ एकादशन्यासमां. |
| ॥ ५३२ ॥ पुरीमत्पदानांगायत्रीपदपंक्तिर्थालिंगोक्तदेवताः | ॥ ५३२ ॥ एकादशन्यासमां. |
| ॥ ५३३ ॥ एतिमत्पदानांगायत्रीपदपंक्ति० | ॥ ५३३ ॥ एकादशन्यासमां. |

॥ ५३४ ॥ विदारायेसुवीर्यंभुवोवाजानांपतिर्वशाऽ अनु ॥ मंऽ हिप्रवर्जिनुंजसेयःशविष्ठःशूराणां ॥४॥
॥ ४ ॥ ॥ ५३५ ॥ योमंऽ हिष्ठोमघोनामऽ शुंर्नशोचिः ॥ चिकित्वोअभिनोनयेंद्रोविदेतमुवस्तुहि
॥ ५ ॥ ५ ॥ ॥ ५३६ ॥ इशाहिशाकस्तमूतयेहवामहेजेतारमपराजितं ॥ सनःस्वर्षदतिद्विषःक्रतुश्छं-
दऋतंबृहत् ॥ ६ ॥ ६ ॥ ॥ ५३७ ॥ इंद्रधनस्यसातयेहवामहेजेतारमपराजितं ॥ सनःस्वर्षदतिद्वि
षःमनःस्वर्षदतिद्विषः ॥ ७ ॥ ७ ॥ ॥ ५३८ ॥ पूर्वस्ययत्तअद्रिवोऽशुर्मदाय ॥ सुम्नआधेहिनोव-
सोपूर्तिःशविष्ठशस्यते ॥ ८ ॥ ८ ॥ ॥ ५३९ ॥ वशीहिशक्रोनूनंतंनव्यंऽसंन्यसे ॥ प्रभोजनस्यवृत्र
हंत्समर्येषुब्रवावहै ॥ ९ ॥ ९ ॥ ॥ ५४० ॥ शूरोयोगोषुगच्छतिसखासुशेवोअद्वयुः ॥ एवाह्योऽ३व ।

| | |
|---|---|
| ॥ ५३४ ॥ पुरीषत्यदानागायत्री० | ॥ ५३४ ॥ एकादशन्यासमां. |
| ॥ ५३५ ॥ पुरीषत्पदानागायत्री० | ॥ ५३५ ॥ एकादशन्यासमां. |
| ॥ ५३६ ॥ पुरीषत्पदानागायत्री० | ॥ ५३६ ॥ एकादशन्यासमां |
| ॥ ५३७ ॥ पुरीषत्पदानागायत्री० | ॥ ५३७ ॥ एकादशन्यासमां. |
| ॥ ५३८ ॥ पुरीषत्पदानागायत्री० | ॥ ५३८ ॥ एकादशन्यासमां. |
| ॥ ५३९ ॥ पुरीषत्पदानागायत्री० | ॥ ५३९ ॥ एकादशन्यासमां |
| ॥ ५४० ॥ पुरीषत्पदानागायत्री० | ॥ ५४० ॥ एकादशन्यासमां. |

एवाह्यग्ने । एवाहींद्र । एवाहिपूषन् । एवाहिदेवाः । ॐ एवाहिदेवाः ॥ १० ॥ १० ॥ ३ इति चत्रो

वदेति ॥ ६ ॥ ॥ इतिश्री मंत्रसंहितायामारण्यार्चिकं समाप्तम् ॥ आरण्यार्चिकस्य मंत्र संख्यांकाः ॥ ४२ ॥

॥ सामवेदस्य मंत्रसंहितायां आरण्यार्चिक समाप्तम् ॥ संवत् १९५६ फाल्गुण ॥

श्रीगणेशायनमः



श्रीसामवेदायनमः

# ॥ अथोत्तरार्चिकस्य मंत्रसंहितायाः संग्रहः ॥

## ॥ अथ प्रथमः प्रपाठकः प्रारंभः ॥

॥ श्रीसामवेदायनमः ॥ ॥ ५४१ ॥ ॐ उपास्मैगायतानरःपवमानायेंदवे । अभिदेवाँ इयक्षते ॥ अभितेमधुनापयोथर्वाणोअशिश्रयुः । देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्वते । शंराजन्नोषधीभ्यः ॥ १ ॥ १ ॥ ॥ ५४२ ॥ दविद्युतत्यारुचापरिष्टोभंत्यारुपा । सोमाःशुक्रागवाशिरः ॥ हिन्वानोहेतृभिर्हितआवाजंवाज्यक्रमीत् । सीदंतोवनुषोयथा ॥ ऋधक्सोमस्वस्तयेसंजग्मा

| | |
|---|---|
| ॥ ५४१ ॥ असितोगायत्रीसोमः | ॥ ५४१ ॥ उपाकर्ममां. मध्यान्हला अभिषेकमां. मार्जनमां. एकादशन्यासमां. |
| ॥ ५४२ ॥ कश्यपोगायत्रीसोमः | ॥ ५४२ ॥ उपाकर्ममां. मार्जनमां. मध्यान्हला अभिषेकमां. एकादशन्यासमां |

नोदिवाकवे । पवस्वसूर्योदृशे ॥ २ ॥ २ ॥ ॥ ५४३ ॥ पवमानस्यतेकवेवाजिंत्सर्गाअसृक्षत ॥ अ
र्वतोनश्रवस्यवः ॥ अच्छाकोशंमधुश्चुतमसृग्रंवारेअव्यये । अवावशंतधीतयः ॥ अच्छासमुद्रमिंदवो
स्तंगावोनधेनवः । अग्मंनृतस्ययोनिमा ॥ ३ ॥ ३ ॥ ॥ ५४४ ॥ अग्नआयाहिवीतयेगृणानोह-
व्यदातये । निहोतासत्सिबर्हिषि ॥ तंत्वासमिद्भिरंगिरोघृतेनवर्द्धयामसि । बृहच्छोचायविष्ठ्य ॥ स
नःपृथुश्रवाय्यमच्छादेवविवासति । बृहदग्नेसुवीर्यं ॥ ४ ॥ ४ ॥ ॥ ५४५ ॥ आनोमित्रावरुणाघृतै
र्गव्यूतिमुक्षतं । मध्वारजांसिसुक्रतू ॥ उरुशंसानमोवृधामह्नादक्षस्यराजथः । द्राघिष्ठाभिःशुचि
व्रता ॥ गृणानाजमदग्निनायोनावृतस्यसीदतं । पातंसोममृतावृधा ॥ ५ ॥ ५ ॥ ॥ ५४६ ॥ आ
याहिसुषुमाहितइंद्रसोमंपिबाइमं । एदंबर्हिःसदोमम ॥ आत्वाब्रह्मयुजाहरीवहतामिंद्रकेशिना । उ
पब्रह्माणिनःशृणु ॥ ब्रह्माणस्त्वायुजावयंसोमपामिंद्रसोमिनः । सुतावंतोहवामहे ॥ ६ ॥ ६ ॥

| | |
|---|---|
| ॥ ५४३ ॥ वैखानसंगायत्रींसोमसूर्यौ | ॥ ५४३ ॥ एकादशन्यासमां, उपाकर्ममां मध्यान्हना अभिषेकमां मार्जनमां. |
| ॥ ५४४ ॥ भरद्वाजोगायत्र्यग्निः | ॥ ५४४ ॥ एकादशन्यासमां उपाकर्ममां |
| ॥ ५४५ ॥ विश्वामित्रोगायत्रीमित्रावरुणौ | ॥ ५४५ ॥ एकादशन्यासमां उपाकर्ममां, |
| ॥ ५४६ ॥ इरिंबिठिर्गायत्रींद्र | ॥ ५४६ ॥ एकादशन्यासमां. उपाकर्ममां, |

॥ ५४७ ॥ इंद्राग्नीआगतꣳ सुतंगीर्भिर्नभोवरेण्यं । अस्यपातंधियेषिता ॥ इंद्राग्नीजरितुःसचायज्ञो-
जिगातिचेतनः । अयापातमिमꣳ सुतं ॥ इंद्रमग्निंकविच्छदायज्ञस्यजूत्यावृणे । तासोमस्येहतृम्पताम्
॥ ७ ॥ ७ ॥ ॥ ५४८ ॥ उच्चातेजातमंधसोदिविसद्भूम्याददे । उग्रꣳ शर्ममहिश्रवः ॥ सनइंद्राय-
यज्यवेवरुणायमरुद्भ्यः । वरिवोवित्परिस्रव ॥ एनाविश्वान्यर्यआद्युम्नानिमानुषाणाम् । सिषासंतो
वनामहे ॥ ८ ॥ ८ ॥ ॥ ५४९ ॥ पुनानःसोमधारयापोवसानोअर्षसि । आरत्नधायोनिमृतस्यसीद
दस्युत्सोदेवोहिरण्ययः ॥ दुहानऊधर्दिव्यंमधुप्रियंप्रत्नꣳ सधस्थमासदत ॥ आपृच्छ्यंधरुणंवाज्यर्षसि
नृभिर्धौतोविचक्षणः ॥ ९ ॥ ९ ॥ ॥ ५५० ॥ प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोअभिवाजमर्ष
। अश्वंनत्वावाजिनंमर्जयंतोच्छाबर्हीरशनाभिर्नयंति ॥ स्वायुधःपवतेदेवइंदुरशस्तिहावृजनारक्षमा
णः । पितादेवानांजनितासुदक्षोविष्टंभोदिवोधरुणःपृथिव्याः ॥ ऋषिर्विप्रःपुरएताजनानामृभुर्धीर

॥ ५४७ ॥ विश्वामित्रोगायत्रींद्राग्नी
॥ ५४८ ॥ अमहीयुर्गायत्रंसाम ॥ समरुद्गावारुणी.
॥ ५४९ ॥ समश्रुयंवाद्धतोककुत्सरासोम
॥ ५५० ॥ उशना त्रिष्टुप्सराष्टस्य.

॥ ५४७ ॥ एकादशान्यासमर्मा उपाकर्ममर्मा.
॥ ५४८ ॥ एकादशान्यासमर्मा, उपाकर्ममर्मा, पूर्णाहुतिर्मा.
॥ ५४९ ॥ एकादशान्यासमर्मा उपाकर्ममर्मा
॥ ५५० ॥ एकादशान्यासमर्मा, उपाकर्ममर्मा.

उशनाकाव्येन । सचिद्विवेदनिहितंयदासामपिच्या३६ गुह्यंनामगोनां ॥ १० ॥ १० ॥ ॥ ५५१ ॥ अभि
त्वाशूरनोनुमोदुग्धाइवधेनवः । ईशानमस्यजगतःस्वर्दृशमीशानमिंद्रतस्थुपः ॥ नत्वावाह्नं अन्यो-
दिव्योनपार्थिवोनजातोनजनिष्यते । अश्वायंतोमघवन्निंद्रवाजिनोगव्यंतस्त्वाहवामहे ॥ ११ ॥
॥ ११ ॥ ॥ ५५२ ॥ कयानश्चित्रआभुवदूतीसदावृद्धःसखा । कयाशचिष्ठयावृता ॥ कस्त्वासत्यो
मदानांमं६ हिष्ठोमत्सदंधसः । दृढाचिदारुजेवसु ॥ अभिपुणःसखीनामविताजरितॄणाम् । शतंभ
वास्यूतये ॥ १२ ॥ १२ ॥ ॥ ५५३ ॥ तंवोदस्ममृतीपहंवसोर्मदानमंधसः । अभिवत्संनस्वसरे
पुधेनवइंद्रंगीर्भिर्नवामहे ॥ द्युक्षं६ सुदानुंतविषीभिरावृतंगिरिन्नपुरुभोजसं । क्षुमंतंवाजं६ शतिनं६
सहस्त्रिणंमक्षूगोमंतमीमहे ॥ १३ ॥ १३ ॥ ॥ ५५४ ॥ तरोभिर्वोविदद्वसुमिंद्रं६ सबाधऊतये । वृ

॥ ५५१ ॥ वसिष्ठोबृहतीककुबुत्तरार्चाना
॥ ५५२ ॥ वामदेवोगायत्रीप्रजापतिः
॥ ५५३ ॥ नोधाबृहतींद्रः
॥ ५५४ ॥ कलीबृहतींद्र.

॥ ५५१ ॥ सन्यस्तमां. सपुटीकरणमां. मंडळमां. वास्तुमां. होममां. अभिषेकमां. उपाकर्ममा. भासादिमां. पचवक्रपूजन तथा न्यासमां.
॥ ५५२ ॥ एकादशन्यासमां. बलिदानमां. होमप्रकरणमां. वास्तुमां. उपाक-
॥ ५५३ ॥ उपाकर्ममां. [ र्ममां. दशादिकपाळमां. कळीनो अंत्ये ( एकऋचा रा
॥ ५५४ ॥ उपाकर्ममां. [ हुना मळनोले. )

इंद्रायेंदः सुतसोमेभ अध्वरेहुवेभरन्नकारिणं ॥ नयंदुग्धावरंतेनस्थिरामुरोमदेषुशिप्रमंधसः । यआदृत्या
शशमानायसुन्वतेदाताजरित्रउक्थ्यं ॥ १४ ॥ १४ ॥ ॥ ५५५ ॥ स्वादिष्ठयामदिष्ठयापवस्वसो
मधारया । इंद्रायपातवेसुतः ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते । द्रोणेसधस्थमासदत् ॥ वरि-
वोधातमोभुवोमंहिष्ठोवृत्रहंतमः । पर्षिराधोमघोनाम् ॥ १५ ॥ १५ ॥ ॥ ५५६ ॥ पवस्वमधु
मत्तमइंद्रायसोमक्रतुवित्तमोमदः । महिद्युक्षतमोमदः ॥ यस्यतेपीत्वावृषभोवृषायतेस्यपीत्वास्वर्वि
दः । ससुप्रकेतोअभ्यक्रमीदिषोछावाजन्नैतशः ॥ १६ ॥ १६ ॥ ॥ ५५७ ॥ इंद्रमच्छसुताइमेवृ
षणंयंतुहरयः । श्रुष्टेजातासइंदवः स्वर्विदः ॥ अयंभरायसानसिरिंद्रायपवतेसुतः । सोमोजैत्रस्यचे
ततियथाविदे ॥ अस्येदिंद्रोमदेष्वा । ग्राभंगृभ्णातिसानसिं । वज्रंचवृषणंभरत्समप्सुजित् ॥ १७ ॥
॥ १७ ॥ ॥ ५५८ ॥ पुरोजितीवोअंधसः सुतायमादयित्नवे । अपश्वानंश्नथिष्टनसखायोदीर्घजि-

॥ ५५५ ॥ मधुछंद्गायत्रीसोमः
॥ ५५६ ॥ गौरीवितिः ककुबुष्णिगिंद्रसोमौ.
॥ ५५७ ॥ ऋग्निश्चाक्षुषिगिंद्रसोमौ.
॥ ५५८ ॥ अधिगुरनुष्टुबुत्तरागायत्रीसोमः

॥ ५५५ ॥ एकादशन्यासमा. उपाकर्मंमां.
॥ ५५६ ॥ उपाकर्मंमां. एकादशन्यासमां.
॥ ५५७ ॥ उपाकर्मंमां. एकादशन्यासमां.
॥ ५५८ ॥ उपाकर्मंमां. एकादशन्यासमां.

ह्यं ॥ योधारयापावकयापरिप्रस्यंदतेसुतः । इंदुरश्वोनकृत्व्यः ॥ तंदुरोपमभिनरःसोमंविश्वाच्याधि
या । यज्ञायसंत्वद्रयः ॥ १८ ॥ १८ ॥ ॥ ५५९ ॥ अभिप्रियाणिपवतेचनोहितोनामानियह्वोअधियेषु
वर्द्धते । आसूर्यस्यबृहतोबृहन्नधिरथंविष्वंचमरुहाद्विचक्षणः ॥ ऋतस्यजिह्वापवतेमधुप्रियंवक्तापति
र्धियोअस्याअदाभ्यः । दधातिपुत्रःपित्रोरपीच्या३ंनामतृतीयमधिरोचनंदिवः ॥ अवद्युतानःकलशाँ
ऽअचिक्रदन्नृभिर्येमाणःकोशआहिरण्यये । अभीऋतस्यदोहनाअनूषताधित्रिपृष्ठउपसोविराजसि ॥
॥ १९ ॥ १९ ॥ ॥ ५६० ॥ यज्ञायज्ञावोअग्नयेगिरागिराचदक्षसे । प्रप्रवयममृतंजातवेदसंप्रि
यंमित्रंनशंसिषं ॥ ऊर्जोनपातꣳसाहिनायमस्मयुर्दाशेमहव्यदातये । भुवद्वाजेष्ववितोभुवद्वृधउत
त्रातातनूनां ॥ २० ॥ २० ॥ ॥ ५६१ ॥ एह्यूषुब्रवाणितेग्नइत्थेतरागिरः । एभिर्वर्द्धासइंदुभिः ॥
यत्रक्वचतेमनोदक्षंदधसउत्तरं । तत्रयोनिंकृणवसे ॥ नहितेपूर्तमक्षिपद्भुवन्नेमानांपते । अथादुवोव

॥ ५५९ ॥ कविर्जगतिसूर्यसोमौ.
॥ ५६० ॥ शंयुर्बृहत्यग्निः
॥ ५६१ ॥ भरद्वाजोगायत्र्यग्निः

॥ ५५९ ॥ उपाकर्मणि. एकादशन्यासमां.
॥ ५६० ॥ उपाकर्मणि. एकादशन्यासमां.
॥ ५६१ ॥ उपाकर्मणि.

नवसे ॥ २१ ॥ २१ ॥ ॥ ५६२ ॥ वयमुत्वामपूर्व्यस्थूरन्नकञ्चिद्भरन्तोवस्यव । वज्रिञ्चित्रहं हवामहे ॥ उपत्वाकर्मन्नूतयेसनोयुवोग्रश्चक्रामयोधृषत् । त्वामिध्यवितारंववृमहेसखायइंद्रसानसिं ॥ ॥ २२ ॥ २२ ॥ ॥ ५६३ ॥ अधाहीन्द्रगिर्वणउपत्वाकामईमहेससृग्महे । उदेवग्मंतउदभि । ॥ वार्णत्वायव्याभिर्वर्धन्तिशूरब्रह्माणि । वावृध्वाह्ंसचिदद्रिवोदिवेदिवे ॥ युञ्जन्तिहरीइषिरस्यगाथयोरौरथउरुयुगेवचोयुजा । इन्द्रवाहास्वर्विदा ॥ २३ ॥ २३ ॥ ॥ इतिश्री मंत्रसहितायामुत्तरार्चिके प्रथमस्यार्द्धः प्रपाठक ॥ * ॥ अथ द्वितीयः प्रपाठक प्रारंभ ॥ ॐ ॥

॥ ५६४ ॥ मित्रंवयंहवामहेवरुणंसोमपीतये । याजातापूतदक्षसा ॥ ऋतेनयावृतावृधावृतस्यज्योतिषस्पती । तामित्रावरुणाहुवे ॥ वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः । करतान नु

| | |
|---|---|
| ॥ ५६२ ॥ सोमरिः कुसुरुविन्दिन्द्र | ॥ ५६२ ॥ उपाकमसा |
| ॥ ५६३ ॥ नृमेधाकपुरुमेधयुजावेन्दुद्वविन्द्र | ॥ ५६३ ॥ उपाकर्मभा |
| ॥ ५६४ ॥ मेधातिथिगायत्रीमित्रसामवरुणौमित्रावरुणौवा | ॥ ५६४ ॥ गास्तुमा |

* ॥ या उत्तरार्चिकाचा अर्द्ध प्रपाठकमा मठी आलेला नथी ते प्रपाठक लख्या नथा ॥

राधसः ॥ ७ ॥ १ ॥ ॥ ५६५ ॥ त्वामिद्धिहवामहेसातौवाजस्यकारवः । त्वांवृत्रेष्विन्द्रसत्पतिं
नरस्त्वांकाष्ठास्वर्वतः ॥ सत्वंनश्चित्रवज्रहस्तधृष्णुयामहस्तवानोअद्रिवः । गामश्वꣳ रथ्यमिन्द्रसंकि
रसत्रावाजंनजिग्युषे ॥ १२ ॥ २ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिकेद्वितीयार्द्धः प्र
पाठकः ॥ ॥ ५६६ ॥ अग्निनाग्निःसमिध्यतेकविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ॥ यस्त्वामग्नेह
विष्पतिर्दूतंदेवसपर्यति । तस्यस्मप्राविताभव ॥ योअग्निंदेववीतयेहविष्माꣳ आविवासति । तस्मै
पावकमृडय ॥ ५ ॥ १ ॥ ॥ ५६७ ॥ (ऋचा २जीर्था) तरत्समुद्रंपवमानऊर्मिणाराजादेवऋतंबृह
त् । अर्षामित्रस्यवरुणस्यधर्मणाप्रहिन्वानऋतंबृहत् ॥ नृभिर्येमाणोहर्यतोविचक्षणोराजादेवःसमु
द्रयः ॥ ९ ॥ २ ॥ ॥ ५६८ ॥ यद्यावइंद्रतेशतꣳ शतंभूमीरुतस्युः । नत्वावज्रिन्त्सहस्रꣳ सूर्याअनुन

॥ ५६५ ॥ भरद्वाजोबृहतींद्रं
॥ ५६६ ॥ मेधातिथिर्गायत्रीनिमध्याहवनीयाग्नी
॥ ५६७ ॥ सप्तऋषयोबृहतीसोममित्रावरुणौ
॥ ५६८ ॥ पुरुहन्माबृहतींद्रसूर्यौ

॥ ५६५ ॥ एकादशान्यासमां.
॥ ५६६ ॥ संन्यस्तमां.
॥ ५६७ ॥ वास्तुमा.
॥ ५६८ ॥ एकादशान्यासमां.

जातमष्टरोदसी ॥ आपप्राथमहिनावृष्ण्यावृषन्विश्वाशाविप्रशावसा । अस्माऽ अवमघवन्गोमतिव्र
जेवाज्रिंचित्राभिरूतिभिः ॥ ११ ॥ ३ ॥ ॥ ५६९ ॥ ( ऋचा २ ओथो ३ औहुवा ) अभिब्रह्मणीरनूषतयह्वी
ऋतस्यमातरः । मर्जयंतीर्दिवःशिशुं ॥ १४ ॥ ४ ॥ ॥ ५७० ॥ पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्रा
णिपर्येषिविश्वतः । अतप्ततनूर्नतदामोअश्नुतेशृतासइद्वहंतःसंतदाशत ॥ तपोष्पवित्रंविततंदिव
स्पदेशोचंतोअस्यतंतवोव्यस्थिरन् । अवंत्यस्यपवितारमाशवोदिवःपृष्ठमधिरोहंतितेजसा ॥ अरूरुच
दुषसःपृश्निरग्रियउक्षामिमेतिभुवनेषुवाजयुः । मायाविनोममिरेअस्यमाययानृचक्षसःपितरोगर्भ
मादधुः ॥ १६ ॥ ५ ॥ ॥ ५७१ ॥ ( ऋचा ३ ओथो ) तमुष्टवामयंगिरइंद्रमुक्थानिवावृधुः । पुरूण्य
स्यपौंऽस्यासिषासंतोवनामहे ॥ १९ ॥ ६ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके द्विती
यः प्रपाठकः ॥ २ ॥ ॥ अथ तृतीयः प्रपाठकः प्रारंभः ॥ ॥ ५७२ ॥ ( ऋचा ३ ओथो ) तां

---

॥ ५६९ ॥ विरूपगायत्रीसोम
॥ ५७० ॥ पवित्रोजगतीब्रह्मणस्पतिर्नोमौ
॥ ५७१ ॥ तिरश्च्यनुष्टुबिंद्र
॥ ५७२ ॥ शौनकोगायत्रीमित्रावरुणौ

॥ ५६९ ॥ मूर्धाभिधानमा
॥ ५७० ॥ उपाकर्म ( पुष्पदान ) मा मध्यान्हमा.
॥ ५७१ ॥ मार्जनमा.
॥ ५७२ ॥ मंडलमा

संम्राजावृतासुतीआदित्यादानुनस्पती । सचंतेअनवह्वरं ॥ ७ ॥ १ ॥ ॥ ५७३ ॥ पिबासोमामिं
द्रमंदतुत्वायंतेसुषावहर्यश्वाद्रिः । सोतुर्बाहुभ्याᳲसुयतोनार्वा ॥ यस्तेमदोयुज्यश्चारुरस्ति । येनवृत्रा
णिहर्यश्वहᳲसि । सत्वामिंद्रप्रभूवसोममतु ॥ बोधासुमेमघवन्वाचमेमांयांतेवसिष्ठोअर्चतिप्रश स्तिं ।
इमाब्रह्मसधमादेजुषस्व ॥ १३ ॥ २ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिकेतृतीयार्द्धः
प्रपाठकः ॥ ॥ ५७४ ॥ ( ऋचा ३ जोथी ) ईशानइमाभुवनानिईयसेयुजानइंद्रोहरितःसुपर्ण्यः ।
तास्तेक्षरंतुमधुमद्घृतंपयस्तवव्रतेसोममतिष्ठंतुकृष्टयः ॥ १ ॥ १ ॥ ॥ ५७५ ॥ उत्तिष्ठन्नोजसासह-
पीत्वाशिप्रेअवेपयः । सोममिंद्रचमूसुतं ॥ अनुत्वारोदसीउभेस्पर्द्धमानमददेतां । इंद्रयद्दस्युहाभवः
॥ वाचमष्टापदीमहंनवस्त्राक्तिमृतावृधं । इंद्रात्परितन्वंममे ॥ ९ ॥ २ ॥ ॥ ५७६ ॥ ( ऋचा २ जोथी ३ जो
घुधी ) अप्सुइंद्रायवायवेवरुणायमरुद्भ्यः । सोमाअर्षतुविष्णवे ॥ ११ ॥ ३ ॥ इतिश्री मंत्रसंहि

॥ ५७३ ॥ वसिष्ठोत्रिष्टाबिंद्रः
॥ ५७४ ॥ अत्रिगोत्राऋषिगणाजगतीसोमः
॥ ५७५ ॥ कुत्सुतिर्गायत्रींद्रः
॥ ५७६ ॥ जमदग्निर्गायत्रीसोमेंद्रौ.

॥ ५७३ ॥ एकादशान्यासमां.
॥ ५७४ ॥ मूळविधानमां. पचकशांतिमां.
॥ ५७५ ॥ विसर्जनमां.
॥ ५७६ ॥ मूळविधानमां.

तायामुत्तरार्चिके तृतीयः प्रपाठकः ॥ ३ ॥ ॥ अथ चतुर्थः प्रपाठकः प्रारंभः ॥

॥ ५७७ ॥ तरत्समंदीधावतिधारासुतस्यांधसः । तरत्समंदीधावति ॥ उस्रावेदवसूनांमर्तस्यदेव्यव
सः । तरत्समंदीधावति ॥ ध्वस्रयोःपुरुषंत्योरासहस्राणिदद्महे । तरत्समंदीधावति ॥ आययोस्त्रिं
शतंतनासहस्राणिचदद्महे । तरत्समंदीधावति ॥ ५ ॥ १ ॥ ॥ ५७८ ॥ (ऋचा २ जीयो) रसंतेमि
त्रोअर्यमापिबंतुवरुणःकवे । पवमानस्यमरुतः ॥ ११ ॥ २ ॥ ॥ ५७९ ॥ रेवतीर्नःसधमादइंद्रेसं
तुतुविवाजाः । क्षुमंतोयाभिर्मदेम ॥ आघत्वावा॒त्मनायुक्तःस्तोतृभ्योधृष्णवीयानः । ऋणोरक्षंन
चक्र्योः ॥ आयद्दुवःशतक्रतवाकामंजरितॄणां । ऋणोरक्षन्नशचीभिः ॥ १४ ॥ ३ ॥ ॥ ५८० ॥ (ऋ-
चा २ जोयो ३ जी सूधी) वसुरग्निर्वसुश्रवाअछानक्षिद्युमत्तमोरयिंदाः ॥ २२ ॥ ४ ॥ ॥ इतिश्री मं

॥ ५७७ ॥ अवत्सारोगायत्रीसोमः
॥ ५७८ ॥ कश्यपोगायत्रींद्रसोमौमित्रार्यमणौवरुणाः
॥ ५७९ ॥ शुनःशेपोगायत्रींद्रः
॥ ५८० ॥ बंधुर्गौपायनोविप्रपंक्तिरग्निः

॥ ५७७ ॥ मार्जनसा मध्यान्हना आभिषेकसमो.
॥ ५७८ ॥ पंचामृतसा (शर्करास्नाने)
॥ ५७९ ॥ पक्वा…समा
॥ ५८० ॥ मातृस्नाने … पासुं …

त्रसंहितायामुत्तरार्चिके चतुर्थार्द्ध· प्रपाठकः ॥ [॥४१॥] ॥ ५८१ ॥ (ऋचा ८ मीथी ९ मी सुधी) आपा
नासोविवस्वतोजिन्वन्तउषसोभग । सूराअण्वांवितन्वते ॥ १ ॥ १ ॥ [॥४२॥] ॥ ५८२ ॥ (ऋचा ११ मीथी
१२ मी सुधा) नाभानाभिन्नआददेचक्षुषासूर्यंदृशे । कवेरपत्यमादुहे ॥ २ ॥ २ ॥ [॥४३॥] ॥ ५८३ ॥ मूर्द्धा
नंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निं । कविः संम्राजमतिथिंजनानामासन्नःपात्रंजनयं
तदेवाः ॥ त्वांविश्वेअमृतजायमानः शिशुन्नदेवाअभिसंनवन्ते । तवक्रतुभिरमृतत्वमायन्वैश्वानरय
त्पित्रोरदीदेः ॥ नाभियज्ञानाः सदनः रयीणांमहामाहावमभिसन्नवंत । वैश्वानरः रथ्यमध्वराणांय
ज्ञस्यकेतुंजनयतदेवाः ॥ ३ ॥ ३ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके चतुर्थः प्रपा
ठकः ॥ ४ ॥ ॥ अथ पंचमः प्रपाठकः प्रारंभः ॥ [॥४४॥] ॥ ५८४ ॥ (ऋचा ३ जा ४ थी सुधी) मंद·

॥ ५८१ ॥ सूपगणाविष्णुपूशोपाणा
॥ ५८२ ॥ सूपगणाविष्णुपूशोपाणा
॥ ५८३ ॥ मरद्वाजविष्णुरग्निर्वैश्वानरोदेपाश्च.
॥ ५८४ ॥ असंयत्रसोमो

॥ ५८१ ॥ वास्तुमा
॥ ५८२ ॥ कुंडपूजनमा,
॥ ५८३ ॥ होमप्रकरणमां पूर्णाहुतिमा
॥ ५८४ ॥ होमप्रकरणमा

च्युतक्षेतिसादनेसिधारूमाविपश्चित् । सोमोगौरीअधिश्रितः ॥ ४ ॥ १ ॥ ॥ ५८५ ॥ (ऋचा ४ थी ५ मी सुधी) आपवस्वमर्दितमपावित्रंधारयाकवे ॥ अर्कस्ययोनिमासदं ॥ ५ ॥ २ ॥ ॥ ५८६ ॥ (ऋचा ३ थी) त्वंपाविंद्रदाशुषोनृइंपाहिश्रृणुहीगिरः । रक्षातोकमुतत्मना ॥ १८ ॥ ३ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके पंचमार्द्धः प्रपाठक. ॥ ॥ ५८७ ॥ महां इंद्रायओजसापर्जन्यो वृष्टिमा इव । स्तोमैर्वत्सस्यवावृधे ॥ कण्वाइंद्रंयदक्रतस्तोमैर्यज्ञस्यसाधनं । जामिब्रुवतआयुधा ॥ प्रजामृतस्यापिप्रत-प्रयद्भरतवह्नयः । विप्राऋतस्यवाहसा ॥ १० ॥ १ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके पंचमः प्रपाठकः ॥ ५ ॥ ॥ अथ षष्ठः प्रपाठकः प्रारंभः ॥ ६ ॥ ५८८ ॥ एतोन्विंद्रं स्तवामशुद्धं शुद्धेनसाम्ना । शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान्ममत्तु

॥ ५८५ ॥ उच्चयोगायत्रीसामेंद्री
॥ ५८६ ॥ उश्नागायत्र्याग्नेर्देवाश्च
॥ ५८७ ॥ वत्सोगायत्रींद्र
॥ ५८८ ॥ तिरश्चिरनुष्टुबैंद्रः

॥ ५८५ ॥ वास्तुमा
॥ ५८६ ॥ कौतुकयधनमा
॥ ५८७ ॥ वास्तुमा [ महालयथाद्धमा कौतुकयधनमा-
॥ ५८८ ॥ मार्जनमा मध्यान्हना अभिषेकमा दर्शश्राद्धमा

॥ इन्द्रग्ना न आगहि शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्य ॥ इंद्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥ ९ ॥ १ ॥ ॥ ५८९ ॥ ( ऋचा २ जीथो ३ जी सुधी ) अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः । अभि चन्द्रा भर्तवे नो हिरण्याभ्यश्वान् रथिनो देव सोम ॥ १८ ॥ २ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके षष्ठस्य द्वितीयार्द्धः प्रपाठकः ॥ ॥ ५९० ॥ ( ऋचा ३ जीथी ) इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् । विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ ५ ॥ १ ॥ ॥ ५९१ ॥ ( ऋचा ३ जीथी ) केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ १२ ॥ २ ॥ ॥ इति श्री मंत्रसंहितायामुत्तरार्चिके षष्ठः प्रपाठकः ॥ ६ ॥ ॥ अथ सप्तमः प्रपाठकः प्रारं

| | |
|---|---|
| ॥ ५८९ ॥ कुत्साङ्गिरसस्त्रिष्टुप्सोमभिन्द्रावरुणेन्द्रा- | ॥ ५८९ ॥ लक्षहोममां. |
| ॥ ५९० ॥ सूर्या जगतीसूर्यः | ॥ ५९० ॥ वास्तुमां. |
| ॥ ५९१ ॥ विश्वामित्रोगायत्रीन्द्रः | ॥ ५९१ ॥ होमप्रकरणमां. नवग्रहमां ( केतुनो ) तर्पणमां. |

भः ॥ ॥ ५९२ ॥ (ऋचा २ जीर्णा) अग्नेपवस्वस्वपाअस्मेवर्च्चस्सुवीर्यं । दधद्रयिंमयिपोषं ॥ १२ ॥ ॥ १ ॥ इतिश्री मंत्रसंहितायामुत्तरार्च्चिके सप्तमस्य प्रथमार्द्धः प्रपाठकः ॥ ॥ ५९३ ॥ कें त्वंजामिर्जनानामग्नेकोदाश्वध्वरः । कोहकस्मिन्नसिश्रितः ॥ त्वंजामिर्जनानामग्नेमित्रोअसिप्रियः । सखासखिभ्यईड्यः ॥ यजानोमित्रावरुणायजादेवाꣳ ऋतंबृहत् । अग्नेयक्षिस्वंदमं ॥ १ ॥ १ ॥ ॥ ५९४ ॥ ईडेन्योनमस्यस्तिरस्तमाꣳसिदर्शतः । समग्निरिध्यतेवृषा ॥ वृषोअग्निःसमिध्यतेश्वोनदेववाहनः । तꣳहविष्मतईडते ॥ वृषणंत्वावयंवृषन्वृषणःसमिधीमहि । अग्नेदीद्यतंबृहत् ॥ २ ॥ ॥ २ ॥ ॥ ५९५ ॥ उत्तेबृहंतोअर्च्चयःसमिधानस्यदीदिवः । अग्नेशुक्रासईरते ॥ उपत्वाजुह्वो३मम घृताचीर्यंतुहर्यत । अग्नेहव्याजुषस्वनः ॥ मन्द्रꣳहोतारमृत्विजंचित्रभानुंविभावसुं । अग्निमीडेसउश्रवत् ॥ ३ ॥ ३ ॥ ॥ ५९६ ॥ पाहिनोअग्नएकयापाह्यु३तद्वितीयया । पाहिगीर्भिस्तिसृभिरूर्जांपते

| | |
|---|---|
| ॥ ५९२ ॥ वैखानसागायत्र्यग्नि | ॥ ५९२ ॥ सन्यस्तमा |
| ॥ ५९३ ॥ गातमोगायत्र्यग्निः | ॥ ५९३ ॥ वसोर्द्धारामा पुनराधानमा |
| ॥ ५९४ ॥ विश्वामित्रोगायत्र्यग्नि | ॥ ५९४ ॥ वसोर्द्धारामा पुनराधानमा |
| ॥ ५९५ ॥ विरूपोगायत्र्यग्निः | ॥ ५९५ ॥ वसोर्द्धारामा पुनराधानमां. |
| ॥ ५९६ ॥ भर्गाबृहत्यग्नि | ॥ ५९६ ॥ वसोर्द्धारामा पुनराधानमां |

पाहिचतसुभिर्वसो ॥ पाहिविश्वस्माद्रक्षसोअराव्णःप्रस्मवाजपुनोव ॥ त्वामिद्धिनेदिष्टंदेवतातयआ
पिन्नक्षामहेवृधे ॥ ४ ॥ ४ ॥ ॥ ५९७ ॥ इनोराजंनरतिःसमिद्धोरौद्रोदक्षायसुषुमाद् अदर्शि । चि
किद्विभातिभासाबृहतासिक्रीमेतिरुशतीमपाजन् ॥ कृष्णांयदेनीमभिवर्पसाभूज्जनयन्योषांबृहतः
पितुर्जां । ऊर्द्ध्वंभानुं सूर्यस्यस्तभायंदिवोवसुभिररातिर्विभाति ॥ भद्रोभद्रायासचमानआगात्स्वसारं
जारोअभ्येतिपश्चात् । सुप्रकेतैर्द्युभिरग्निर्वितिष्ठंनुशद्भिर्वर्णैरभिराममस्थात् ॥ ५ ॥ ५ ॥ ॥ ५९८ ॥ क
यातेअग्नेअंगिरऊर्जोनपादुपस्तुतिं । वरायदेवमन्यवे ॥ दाशेमकस्यमनसायज्ञस्यसहसोयहो । कदुवो
चइदंनमः ॥ अधात्वद्द हिनस्करोविश्वाअस्मभ्यद्द सुक्षितीः । वाजद्रविणसोगिरः ॥ ६ ॥ ६ ॥
॥ ५९९ ॥ अग्नआयाह्यग्निभिर्होतारंत्वावृणीमहे । आत्वामनक्तुप्रयताहविष्मतीयजिष्ठंबर्हिरासदे ॥
अच्छाहित्वासहसःसूनोअंगिरःस्रुचश्चरंत्यध्वरे । ऊर्जोनपातंघृतकेशमीमहेग्निंयज्ञेषुपूर्व्यं ॥ ७ ॥ ७ ॥

॥ ५९७ ॥ त्रितस्त्रिष्टुबभिरग्नसूर्यौ
॥ ५९८ ॥ उशनागायत्र्यग्निः
॥ ५९९ ॥ धर्णोबृहत्यग्नि

॥ ५९७ ॥ वसोर्धारामां. पुनराधानमां.
॥ ५९८ ॥ वसोर्धारामां. पुनराधानमां
॥ ५९९ ॥ ” ” मणाज्याहुतीमां.

॥ ६०० ॥ अच्छानःशीरशोचिषंगिरोयंतुदर्शतं । अच्छायज्ञासोनमसापुरूवसुंपुरुप्रशस्तमूतये ॥ अ-
ग्निंसूनुंसहसोजातवेदसंदानायवार्याणाम् । द्विताथोभूदमृतोमर्त्येष्वाहोतामंद्रतमोविशि ॥
॥ ८ ॥ ८ ॥ ॥ ६०१ ॥ अदाभ्यःपुरएताविशामग्निर्मानुषीणां । तूर्णीरथःसदानवः ॥ अभिप्रया
ंसिवाहसादाश्वाँ अश्नोतिमर्त्यः । क्षयंपावकशोचिषः ॥ साह्वान्विश्वाअभियुजःक्रतुर्देवानाममृ
क्तः । अग्निस्तुविश्रवस्तमः ॥ ९ ॥ ९ ॥ ॥ ६०२ ॥ भद्रोनोअग्निराहुतोभद्रारातिःसुभगभद्रोअ
ध्वरः । भद्राउतप्रशस्तयः ॥ भद्रंमनःकृणुष्ववृत्रतूर्येयेनासमत्सुसासहिः । अवस्थिरातनुहिभूरिशर्द्ध
तांवनेमातेअभिष्टये ॥ १० ॥ १० ॥ ॥ ६०३ ॥ अग्नेवाजस्यगोमतईशानःसहसोयहो । अस्मेदे
हिजातवेदोमहिश्रवः ॥ सइधानोवसुःकविरग्निरीडेन्योगिरा । रेवदस्मभ्यंपुर्वणीकदीदिहि ॥ क्षपो
राजन्नुतत्मनाग्नेवस्तोरुतोषसः । सतिग्मजंभरक्षसोदहप्रति ॥ ११ ॥ ११ ॥ ॥ ६०४ ॥ विशोवि

॥ ६०० ॥ सुदितिर्वृहस्पतिः
॥ ६०१ ॥ विश्वामित्रागाथिनीदेवाः
॥ ६०२ ॥ सोभरिःपुरुषुष्णिरग्निः
॥ ६०३ ॥ गोतमउष्णिगग्निर्गायत्र्य.
॥ ६०४ ॥ गोपवनःप्रथमानुष्टुबुत्तरेगायत्र्यावग्निः

॥ ६०० ॥ वसोर्द्धारामा पुनराधानमा.
॥ ६०१ ॥ वसोर्द्धारामा. पुनराधानमा
॥ ६०२ ॥ वसोर्द्धारामा पुनराधानमा.
॥ ६०३ ॥ वसोर्द्धारामा. पुनराधानमा.
॥ ६०४ ॥ वसोर्द्धारामा पुनराधानमा.

शोचोअतिथिंवाजयंतःपुरुप्रियं । अग्निर्वोदुर्यंवचस्तुषेशूषस्यमन्मभिः ॥ यंजनासोहविष्मंतोमित्रन्न
सापरासुतिं । प्रशह्सन्तिप्रशस्तिभिः ॥ पन्याह्संजातवेदसंयोदेवताल्युद्यता । हव्यान्यैरयद्दिवि ॥
॥ १२ ॥ १२ ॥ ॥ ६०५ ॥ समिद्धमग्निह्समिधागिरागृणेशुचिंपावकंपुरोअध्वरेध्रुवं । विप्रह्हो
तारंपुरुवारमद्रुहंकविह्सुम्नैरीमहेजातवेदसं ॥ त्वांदूतमग्नेअमृतंयुगेयुगेहव्यवाहंदधिरेपायुमीड्यं ।
देवासश्चमर्त्तासश्चजागृविंविभुंविश्पतिंनमसानिषेदिरे ॥ विभूषन्नग्नउभयाह्अनुव्रतादूतोदेवानाह्
रजसीसमीयसे । यत्तेधीतिह्सुमतिमावृणीमहेधस्मानस्त्रिवरूथःशिवोभव ॥ १३ ॥ १३ ॥ ॥
॥ ६०६ ॥ उपत्वाजामयोगिरोदेदिशतीर्हविष्कृतः । वायोरनीकेअस्थिरन् ॥ यस्यत्रिधात्ववृतंबर्हि-
स्तस्थावसंदिनं । आपश्चिन्निदधापदं ॥ पदंदेवस्यमीढुषोनाधृष्टाभिरूतिभिः । भद्रासूर्यइवोपदृक्
॥ १४ ॥ १४ ॥ इतिश्रीमंत्रसंहितायामुत्तरार्चिके सप्तमस्याद्वितीयार्द्धः प्रपाठकः ॥ ७

॥ ६०५ ॥ भरद्वाजोगायत्र्यग्निः
॥ ६०६ ॥ आग्निर्गायत्र्यग्निः

॥ ६०५ ॥ वसोर्द्धारामां. पुनराधानमां.
॥ ६०६ ॥ वसोर्द्धारामां. पुनराधानमां.

॥ ६०७ ॥ इमंमेवरुणश्रुधीहवमद्याचमृडय । त्वामवस्युराचके ॥ ६ ॥ १ ॥ ॥ ६०८ ॥ विश्वकर्मन्ह विषावावृधानःस्वयंयजस्वतन्वा३ स्वाहिते । मुह्यंत्वन्येअभितोजनासइहास्माकंमघवासूरिरस्तु ॥ ॥ ९ ॥ २ ॥ ॥ ६०९ ॥ (ऋचा २ ओयो) सिंचंतिनमसावटमुच्चाचक्रंपरिज्मानं । नीचीनबारमक्षि तं ॥ १६ ॥ ३ ॥ ॥ ६१० ॥ (ऋचा २ औयो २ औहुवो) विपश्चितेपवमानायगायतमहीनधारात्यंधो अर्षति । अहिर्नजूर्णामतिसर्पतित्वचमत्योनक्रीडन्नसरद्वृषाहरिः ॥ २१ ॥ ४ ॥ इतिश्री मंत्रसं हितायामुत्तरार्चिके सप्तमः प्रपाठकः ॥ ७ ॥ ॥ अथाष्टमः प्रपाठकः प्रारंभः ॥ ॥ ६११ ॥ किमित्तेविष्णोपरिचक्षिनामप्रयद्ववक्षेशिपिविष्टोअस्मि । मावर्पोअस्मदपगूहएतद्यदन्यरू पःसमिथेबभूथ ॥ प्रतत्तेअद्यशिपिविष्टहव्यमर्यःशंसामिवयुनानिविद्वान् । तंत्वागृणामितवसमत

॥ ६०७ ॥ शुनःशेपोवैराङ्गायत्रीवरुणः
॥ ६०८ ॥ भौवनस्त्रिष्टुब्विश्वकर्मा
॥ ६०९ ॥ उरुक्षयोगायत्रीन्द्रः
॥ ६१० ॥ अग्निरंगतीसोमः
॥ ६११ ॥ वासिष्ठस्त्रिष्टुब्विष्णुः

॥ ६०७ ॥ ध्वजापताकामां. पंचकशांतिमां. मंडपमां.
॥ ६०८ ॥ कुंडपूजनमां. वास्तुमां.
॥ ६०९ ॥ लक्षहोममां. मंडपपूजनमां
॥ ६१० ॥ वास्तुमां.
॥ ६११ ॥ नारायणबलीमां.

व्यान्तर्यंतमस्यरजसःपराके ॥ वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टहव्यं । वर्द्धंतुत्वासु
ष्टुतयोगिरोमेयूयपातस्वस्तिभिःसदानः ॥ ४ ॥ १ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके
अष्टमार्द्धः प्रपाठकः ॥ ॥७२॥ ॥ ६१२ ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं । समूढमस्यपांसुले ॥
त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः । अतोधर्माणिधारयन् ॥ विष्णोःकर्माणिपश्यतयतोव्रतानि
पस्पशे । इंद्रस्ययुज्यःसखा ॥ तद्विष्णोःपरमंपदं सदापश्यंतिसूरयः । दिवीवचक्षुराततं ॥ तद्विप्रासो
विपन्युवोजागृवांसःसमिंधते । विष्णोर्यत्परमंपदं ॥ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे । पृ
थिव्याअधिसानवि ॥ ५ ॥ १ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके अष्टमः प्रपाठकः
॥ ८ ॥ ॥ अथ नवमः प्रपाठकः प्रारंभः ॥ ॥७३॥ ॥ ६१३ ॥ ( ऋचा १ लीथी २ जी सुधी ) मोष्वस्मे
पुरोरथमिंद्रायशूषमर्चत । अभीकेचिदुलोककृत्संगेसमत्सुवृत्रहा । अस्माकंबोधिचोदितानभंताम-

| | |
|---|---|
| ॥ ६१२ ॥ मेधातिथिर्गायत्रीविष्णुर्देव | ॥ ६१२ ॥ होमप्रकरणमां मंडलमां एकादशाहमां आन्हिकमां नारायणब- |
| ॥ ६१३ ॥ सुदासैषदन ऋष्यापरिदेव | ॥ ६१३ ॥ उपाकर्ममां बलिदानमां सपुटीकरणमां [ लीमा ... |

न्यंकपांज्याकाअधिधन्वसु ॥ १४ ॥ १ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके नवमस्य प्रथमार्द्धः प्रपाठकः ॥ ॥ ६१४ ॥ अग्निर्ज्योतिर्ज्योतिरग्निरिंद्रोज्योतिर्ज्योतिरिंद्रः । सूर्योज्योतिर्ज्योतिःसूर्यः ॥ पुनरूर्जानिवर्तस्वपुनरग्नइषायुषा । पुनर्नःपाह्यꣳहसः ॥ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया । विश्वप्स्न्याविश्वतस्परि ॥ ८ ॥ १ ॥ ॥ ६१५ ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन । महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः । उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ । आपोजनयथाचनः ॥ १० ॥ २ ॥ ॥ ६१६ ॥ (ऋचा २ जीथी ३ जी सुधी) अप्सुरेतःशिश्रियेविश्वरूपंतेजःपृथिव्यामधियत्संबभूव । अंतरिक्षेस्वंमहिमानंमिमानःकनिक्रंतिवृष्णोअश्वस्यरेतः ॥ १२ ॥ ३ ॥ ॥ ६१७ ॥ (ऋचा २ जीथी ३ जीसुधी) ऊर्ध्वोगंधर्वोअधिनाकेअस्थात्प्रत्यङ्चित्राबिभ्रदस्यायुधानि । वसानोअत्कꣳसुरभिंदृशेकꣳस्व३र्णनामजनतप्रियाणि ॥ १३ ॥

| | |
|---|---|
| ॥ ६१४ ॥ त्रिरुणमजापतिर्गाय यत्निः | ॥ ६१४ ॥ अग्न्याहुतीमा |
| ॥ ६१५ ॥ सिंधुद्विपोगाय याप | ॥ ६१५ ॥ मार्जनमा मध्यान्हमां कौतुकयधनमो. सध्यामां. |
| ॥ ६१६ ॥ सुपर्णस्त्रिष्टुप्सूर्यः | ॥ ६१६ ॥ वास्तुमा. [ आन्हिकमा आधानमा. |
| ॥ ६१७ ॥ वेनस्त्रिष्टुप्यमः | ॥ ६१७ ॥ वास्तुमा मंडलमा |

॥ ४ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके नवमस्य द्वितीयार्द्धः प्रपाठकः ॥ ॥

॥ ६१८ ॥ आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनां। संक्रंदनोनिमिषएकवीरःशतꣳ
सेनाअजयत्साकमिंद्रः॥संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना।तदिंद्रेणजयतत
त्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥ सइषुहस्तैःसनिषंगिभिर्वशीसꣳस्रष्टासयुधइंद्रोगणेन । सꣳसृष्ट
जित्सोमपाबाहुशर्ध्यूर्ग्रधन्वाप्रतिहिताभिरस्ता ॥ १ ॥ १ ॥ ॥ ६१९ ॥ बृहस्पतेपरिदीयारथे-
नरक्षोहामित्राꣳअपबाधमानः । प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविता रथानाम् ॥ बलवि
ज्ञायस्थवीरःप्रवीरःसहस्वान्वाजीसहमानउग्रः। अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमातिष्ठगो
वित् ॥ गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा । इमꣳसजाताअनुवीरयध्वमिंद्रꣳस
खायोअनुसꣳरभध्वं॥ २ ॥ २ ॥ ॥ ६२० ॥ अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिंद्रः

॥ ६१८ ॥ प्रतिरथस्त्रिष्टुविंद्रः
॥ ६१९ ॥ प्रतिरथस्त्रिष्टुविंद्रः
॥ ६२० ॥ प्रतिरथस्त्रिष्टुब्वरुणादित्यामरुतोदेवाश्च.

[ रथसूक्तमां.
॥ ६१८ ॥ नांदीश्राद्धमां. वरुणमां. ध्वजापताकामां. सप्रति-
॥ ६१९ ॥ होमप्रकरणमां. नवग्रह ( गुरुनो मंत्र )मां. होममां
॥ ६२० ॥ वास्तुमां. नांदीश्राद्धमां. होममां. [ नांदीश्राद्धमां.

। दुश्च्यवनःपृतनाषाडयुध्यो३स्माकꣳ सेनाअवतुप्रयत्सु ॥ इंद्रआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुर
एतुसोमः । देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंत्वग्रं ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञआदित्या
नांमरुताꣳ शर्द्धउग्रं । महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ ३ ॥ ३ ॥ ॥
॥ ६२१ ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वानांमामकानांमनाꣳसि । उद्वृत्रहन्वाजिनांवाजिनान्युद्रथा
नांजयतांयंतुघोषाः ॥ अस्माकमिंद्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयंतु । अस्माकंवीराउत्तरेभ
वंत्वस्माꣳ उदेवाअवताहवेषु ॥ असौयासेनामरुतःपरेषामभ्येतिनओजसास्पर्द्धमाना । तांगूहततम
सापव्रतेनयथैतेषामन्योअन्यंनजानात् ॥ ४ ॥ ४ ॥ ॥ ६२२ ॥ अमीषांचित्तंप्रतिलोभयंतीगृहाणां
गान्यप्वेपरेहि । अभिप्रेहिनिर्दहहृत्सुशोकैरंधेनामित्रास्तमसासचंतां ॥ प्रेताजयतानरइंद्रोवःशर्मय
च्छतु । उग्रावःसंतुबाहवोनाधृष्यायथासथ ॥ अवसृष्टापरापतशरव्येब्रह्मसꣳशिते । गच्छामित्रान्प्रप

॥ ६२१ ॥ प्रतिरथस्त्रिष्टुबिंद्र॰ ॥ ६२१ ॥ नार्दीश्चाद्यमा
॥ ६२२ ॥ प्रतिरथस्त्रिष्टुबाप॰ ॥ ६२२ ॥ नार्दीश्चाद्यमा

धस्वमामीयांकंचनोछिपः ॥ ५ ॥ ५ ॥ ॥८३॥ ॥ ६२३ ॥ कंकाःसुपर्णाअनुयंत्वेनान्गृध्राणामन्नमसावस्तु
सेना । मैषांमोच्यघहारश्चनेंद्रवयाᳲ स्येनाननुसंयंतुसर्वान् ॥ अभित्रसेनांमघवन्नस्मांछत्रुयतीमभि।
उभौतामिंद्रवृत्रहन्नग्निश्चदहतंप्रति ॥ यत्रबाणाःसंपतंतिकुमाराविशिखाइव । तत्रनोब्रह्मणस्पतिर
दितिःशर्मयछतुविश्वाहाशर्मयछतु ॥ ६ ॥ ६ ॥ ॥८४॥ ॥ ६२४ ॥ विरक्षोविमृधोजहिविवृत्रस्यहनूरुज
विमन्युमिंद्रवृत्रहन्नमित्रस्याभिदासतः ॥ विनइंद्रमृधोजहिनीचायछतपृतन्यतः । योअस्माᳲ अभि
दासत्यधरंगमयातमः ॥ इंद्रस्यबाहूस्थविरौयुवानावनाधृष्यौसुप्रतीकावसह्यौ । तौयुंजीतप्रथमौयो
गआगतेयाभ्यांजितमसुराणाᳲ सहोमहत् ॥ ७ ॥ ७ ॥ ॥८५॥ ॥ ६२५ ॥ मर्माणितेवर्मणाछादयामिसो
मस्त्वाराजामृतेनानुवस्तां । उरोर्वरीयोवरुणस्तेकृणोतुजयंतंत्वामदेवामदंतु ॥ अंधाअमिताभवता
शीर्षाणोहयइव । तेषांवोअग्निनुन्नानामिंद्रोहंतुवरंवरं ॥ योनस्वोरणोयश्चानिष्टयोजिघाᳲसति । दे

॥ ६२३ ॥ भरद्वाजऋषिरनुष्टुप्छंदः
॥ ६२४ ॥ प्रतिरथोनुष्टुप्छंदः
॥ ६२५ ॥ अप्रतिरथस्त्रिष्टुप्सोमवरुणदेवाश्चदेवता.

॥ ६२३ ॥ नादीश्चाद्यमो
॥ ६२४ ॥ नादीश्चध्यमा.
॥ ६२५ ॥ नादीश्चध्यमा.

वास्तिहृ सर्वध्रुवंतुब्रह्मवर्ममेमांतरहृ शर्मवर्ममममांतरं ॥ ८ ॥ ८ ॥ ॥ ६७६ ॥ मृगोनभीमःकुचरोगि
रिष्ठा॰परावतआजगंथापरस्याः । सृकहृ सहृ शायपविमिंद्रातिग्मंविशत्रूंताढिविम्यधोनुदस्व ॥ भद्रंक-
र्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवाहृ सस्तनुभिर्व्यशेमहिदेवहितंयदायुः ॥
स्वस्तिनइंद्रोवृद्ध॰श्रवाःस्वस्तिन॰पूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्द
धातु ॥ ॐ स्वस्तिनोबृहस्पतिर्दधातु ॥ ९ ॥ ९ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिके नवमः
प्रपाठकः ॥ ९ ॥ ॥ इतिश्री मंत्रसंहितायामुत्तरार्चिकं समाप्तम् ॥ ॥ उत्तरार्चिक
स्य मन्त्रसंख्यांकाः ॥ ८६ ॥

॥ ६२६ ॥ प्रतिरथस्त्रिष्टुबिंद्र | ॥ ६२६ ॥ नावीथाद्धमा वास्तुमा होममा कर्णचेथमा

॥ सामवेदस्य मन्त्रसंहितायामुत्तरार्चिक समाप्त ॥ ॥ संवत् १९४६ आषाढ ॥

॥ श्रीगणेशायनमः ॥



श्रीसामवेदायनमः

# ॥ अथाष्ट ब्राह्मणस्य मंत्रसंहितायाः संग्रहः ॥

॥ अथ तांड्यब्राह्मणस्य प्रथमः प्रपाठकः प्रारंभः ॥

॥ ६२७ ॥ ॐ महन्मेवोचोभर्गोमेवोचोयशोमेवोचस्तोमंमेवोचोभुक्तिंमेवोचःसर्वंमेवोचस्तन्मा यतुतन्माविशतुतेनभुक्षिपीयदेवोदेवमेतुसोमःसोममेत्वृतस्यपथाविहायदौष्कृत्यंवद्दानामासिस्तुति स्तोमसरणासोमंगमेयंपितरोभूःपितरोभूःपितरोभूः ॥ १ ॥ १ ॥ ॥ ६२८ ॥ आप्यायस्वसमेतु तेविश्वतःसोमवृष्ण्यं । भवावाजस्यसंगथे ॥ ५ ॥ २ ॥ ॥ ६२९ ॥ यन्मेयमेवस्वतंमनोजगा

॥ ६२७ ॥ पितृसंहितामां. ॥ ६२८ ॥ पंचगव्यमां. दशविधिस्नानमां (सोमनोमंत्र). ॥ ६२९ ॥ नारायणबलीमां.

.मद्दूरगास्तन्मआवर्त्तयापुनर्जीवातवेनमर्त्तवेथोअरिष्टतातयेयेनाह्याजिमजयद्विचक्ष्ययेनः श्येनᳲ शकुनᳲ सुपर्णयदाहुश्चक्षुरदितावनंतᳲ सोमोनृचक्षामयितद्दधातु ॥ ५ ॥ ३ ॥ ॥ ६३० ॥ देवकृतस्यैनसोवयजनमासिमनुष्यकृतस्यैनसोवयजनमस्यस्मरकृतस्यैनसोवयजनमासियद्दिवाचनक्तंचैनश्चकृमतस्यावयजनमासियत्स्वपंतश्चजाग्रतश्चैनश्चकृमतस्यावयजनमासियद्विद्वाᳲ सश्चाविद्वाᳲ सश्चैनश्चकृमतस्यावयजनमस्यैनसएनसोवयजनमासि ॥ ६ ॥ ४ ॥ ॥ ६३१ ॥ कइदंकस्माअदात्कामः कामायादात्कामोदाताकामः प्रतिग्रहीताकामः समुद्रमाविशत्कामेनत्वाप्रतिगृण्हामिकामैतत्ते ॥ ॥ ८ ॥ ५ ॥ ॥ इतिश्री मंत्रसंहितायां तांड्यब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥ × ॥ अथ सप्तमः प्रपाठकः प्रारंभः ॥ ॥ ६३२ ॥ अपोवाऋत्वियमार्छंत्तासांवायुः पृष्ठव्यवर्त्ततततोवसुवामᳲ सममभवत्तन्मित्रावरुणोपर्यपश्यतांतावब्रूतांवामंमयोइदंदेवेष्वाजनीतितस्माद्वामदेव्यंतत्परिगृण्हतावब्रूतामिदमाविदायेदंनोमाभ्यर्त्तिष्ठामितितत्प्रजापतिरब्रवीन्मह्याएतदध्यजनिममवाएतादितितदग्निरब्रवीन्मांवाएतदन्वजनिममवाएतादितितदिंद्रोब्रवीच्छ्रेष्ठस्यावाएतदहंवः श्रेष्ठोस्मिममवाएत-

॥ ६३० ॥ वैश्वदेवमां ॥ ६३१ ॥ विवाहमां ( प्रतिग्रहदानमां. ) ॥ ६३२ ॥ आधानमां.

× आ अष्टब्राह्मणमां अंदर जे प्रपाठकमां मंत्रो आवेला नथी ते प्रपाठक लख्या नथी.

गितितद्विश्वेदेवाअब्रूवन्नस्मद्देवत्यंवाएतदाढ्‌भ्योधिसमभूदस्माकंवाएतदितितत्प्रजापतिरब्रवीत्सर्वे
पांनिइदमस्तुसर्वइहमुपजीवामेतितत्पृष्टेपुन्यदधुःसर्वदेवत्यंवैवामदेव्यंयत्कवतीपुतेनप्राजापत्यंकोहिप्र
जापतिर्यदनिरुक्तासुतेनप्राजापत्यमानिरुक्तोहिप्रजापतिर्यद्गायत्रीपुतेनाग्नेयंगायत्रछंदाह्यग्निर्यत्पृष्टेपु
न्यदधुस्तेनैन्द्रꣳ सर्वाणिहिपृष्टानीन्द्रस्यानिष्केवल्यानियन्मैत्रावरुणेनुशꣳ सतितेनमैत्रावरुणंयद्धुदेव
त्यमुत्तमंयदंतेनवैश्वदेवꣳ सर्वेष्वेवरूपेपुप्रतितिष्ठतिप्रजापतिर्वाएतांगायत्रींयोनिमपश्यत्तस्आदीधी
तास्यायोनेःपृष्टानिनृजाइतिसरथंतरमसृजततद्रथंतरस्यघोषोन्वसृज्यतसबृहदसृजततत्स्तनइत्वावैपो
न्नसृज्यतसवैरूपमसृजततद्वातस्यघोषोन्वसृज्यतसवैराममसृजततद्भ्रेर्घोषोन्वसृज्यतसशक्करीरसृजत
तदपांघोषोन्वसृज्यतसरैवतीरसृजततद्गवांघोषोन्वसृज्यतेतैर्वाएतानिसहघोषैरसृज्यंतसर्वोस्मिन्योपाः
सर्वाःपुण्यावाचोवदंतियएवंवेद ॥ ८ ॥ १.॥ इतिश्री मंत्रसंहितायां तांड्यब्राह्मणे सप्तमः
प्रपाठकः ॥ ७ ॥ अथचतुर्विंशातिः प्रपाठकः प्रारंभः ॥ ॥ ६३२ ॥ एताएवसमहाव्रताः
सर्वावाएताविराजोदशिनीप्रथमाविꣳ शिनीद्वितीयात्रिꣳ शिनीतृतीयेपावैपरमाविराड्यच्चत्वारिꣳ

शत्रानय-पङ्क्तिर्वैपरमाविराट्परमायामेवविराजिप्रतितिष्ठति ॥ १० ॥ १ ॥ ॥ इतिश्री मंत्रसहितायां तांड्यब्राह्मणे चतुर्विंशति प्रपाठक ॥ इतिश्रीमंत्रसंहितायां तांड्यब्राह्मणं समाप्त ॥ ॥ तांड्यब्राह्मणस्य मंत्रसंख्यांका: ॥ ७ ॥

॥ सामवेदस्य मंत्रसंहितायामष्टब्राह्मणे ताड्यब्राह्मणः समाप्तं ॥ ॥ संवत १९४८ अषाढ. ॥

॥ अथ षड्विंशब्राह्मण प्रारंभ ॥ २ ॥

॥ ॥ ६३४ ॥ अपिगाज्ञातयर्द्नाज्ञातयज्ञस्यक्रियतेमिथ्वग्नेतस्यकल्पयत्वद्‌ हिवेत्थयथायथद्‌ स्वाहा ॥ ६ ॥ १ ॥ ॥ ६३५ ॥ भूमिर्भूमिरगान्मातामातरमप्यगात् ॥ भूयामपुत्रै-पशुभिर्योनो द्वेष्टिसभिद्यतभिति ॥ ३ ॥ २ ॥ ॥ इतिश्री मंत्रसंहितायां षाड्विंश ब्राह्मणं समाप्तं ॥

॥ ६३४ ॥ मायधिजनायाकुतिमां ॥ ६३५ ॥ मायधिसनोआकुतिमा

॥ सामवेदस्य मंत्रसंहिताया मष्टब्राह्मणे षड्विंशसमाप्तम् ॥ ॥ संवत १९४८ अषाढ ॥

## ॥ अथ सामविधानब्राह्मण प्रारंभः ॥ ३ ॥

॥ श्रीगणेशायनमः ॥ ॥ श्री सामवेदायनमः ॥ ॥ ६३६ ॥ यद्वाउविश्पतिःसनादग्नेक्षंनमी मर्तंतह्यभित्रिष्टुप्मकांत्वमुद्रःकनिक्रंतीतिद्वेएपापित्र्यानामस२ँ हितैतांप्रयुंजन्पितॄन्प्रीणाति ॥ १ ॥ ॥ ६३७ ॥ इद२ँ ह्यन्वोजसेतिप्रथमोत्तमेन्धाभिदाह्योनरःसपूर्व्योमहोनांपुरांभिदुर्युवाकविरुपप्रक्षेमधु मतिक्षियंतःपवस्वसोममधुमा२ँ ऋतावासुरूपकृराहसंमाधुछंदसमेपामाधुछंदसीनामस२ँ हितैतयावैदे वाःस्वर्गलोकमायंस्त्वर्गलोकमेतियएवंवेद ॥ २ ॥ ॥ ६३८ ॥ प्रथमस्त्रिवर्गःसावित्र्यांगायत्रंमहा- नाम्न्यश्चैपामृतानामस२ँ हितैतयावैदेवाअमृतत्वमायन्नमृतत्वमेतियएवंवेदवएवंवेद ॥ ३ ॥ ॥

॥ इतिश्री मंत्रसंहितायां सामविधानब्राह्मणं समाप्तं ॥

॥ ६३६ ॥ पितृसहितामां ॥ ६३७ ॥ माधुच्छदसीसहितामां पितृसहितामा. ॥ ६३८ ॥ अमृतासहितामां. पितृसहितामां

॥ सामवेदस्य मंत्रसंहितायामष्टब्राह्मणे सामविधान समाप्त ॥ ॥ संवत १९७६ अषाढ ॥

## ॥ अथ दैवताध्यायब्राह्मण प्रारंभः ॥ ॥ ४ ॥

॥ श्रीगणेशायनमः ॥ ॥ श्री सामवेदायनमः ॥ ॥ ६३९ ॥ अथातोगायत्रमाग्नेयंभत्त्याभवति
देवानांवर्षीणांवापरमेष्ठिनोवाप्राजापत्यस्यसामसावित्रीगेयंयत्रागीतं ॥ तत्सवितुर्वरेणियोम् । भार्गो
देवस्यधीमाहो२ । । धियोयोनःप्रचो१२१२हुम् । आ२ । दायो । आ२२३४५ ॥ ऋषीणांविषयज्ञोयःशरी
राद्विमुच्यते ॥ अतीत्यतमस्पारं स्वर्गेलोकेमहीयते ॥ सहस्रयुगपर्यंतमहर्यद्ब्रह्मणोविदुः ॥ नाकस्य
पृष्ठेतंक लंदिविसूर्यइवरोचते ॥ ततःकृतयुगस्यादौब्रह्मपुत्रोमहायशाः ॥ सर्वज्ञोद्युतिमानृषिःपुनरा
जायतेस्मरन्निति स्मरन्निति ॥ ३ ॥ ॥ ॥ ६४० ॥ अथसावित्र्यंगानिव्याख्यास्यामःशिरोब्रह्माललाटं
रुद्रोश्चेंद्रःग्निर्चक्षुषीमुखमग्निर्जिह्वासरस्वतीत्वष्टाग्रीवावसवश्चरुद्राश्चबाहूउरोवायुःपृष्ठमिंद्रोविष्णु
र्नाभिःप्रजापतिर्जघनमूरूमरुतोवेदाःपादौस्मितंविद्युद्वसितंवायुरस्थीनिपर्वताःसमुद्रावासांसिनक्ष
त्राण्यलंकारोयएवंवेदवृणुतादुस्पयुक्तान्यना‌ऽधिकाबसवेस्वाःस्वास्तिदेवर्षिभ्यश्चब्रह्मसत्यंचपातमामि
तिब्रह्मसत्यंचपातुमामिति ॥ ४ ॥ इतिश्रीमंत्रसंहितायां दैवताध्यायब्राह्मण समाप्तम् ॥

॥ ६३९ ॥ पितृसंहितामा. ॥ ६४० ॥ पितृसंहितामा

॥ सामवेदस्य मंत्रसंहितायां मंत्रब्राह्मण दैवताध्यायब्राह्मण समाप्त ॥ ॥ संवत १९४६ आषाढः ॥

## ॥ अथ वंशब्राह्मण प्रारंभः ॥ ५ ॥

॥ श्रीगणेशायनमः ॥ ॥ श्री सामवेदायनमः ॥ ॥ ६४१ ॥ ॐ नमोब्रह्मणेनमोब्राह्मणेभ्योनमआचार्येभ्योनमऋषिभ्योनमोदेवेभ्योनमोवेदेभ्योनमोवायवेचमृत्यवेचाविष्णवेचनमोवैश्रवणायचोपजायच ॥ शर्वदत्ताद्गार्ग्याछर्वदत्तोगार्ग्योरुद्रभूतेर्द्राह्यायणेरुद्रभूतिर्द्राह्यायणिस्त्रातादैपमतात्त्रातऐपुमतोनिगडात्पार्णवल्केर्निगडःपार्णवल्किर्गिरिशर्मणःकाठेवृद्धेर्गिरिशर्माकाठेवृद्धिर्ब्रह्मवृद्धेछंदोगमाहकेर्ब्रह्मवृद्धिश्छंदोगमाहकिर्मित्रवर्चसःस्थैरकायनान्मित्रवर्चाःस्थैरकायनःसुप्रतीताद्औलुंज्यात्सुप्रतीतऔलुंज्योबृहस्पतेर्गुप्ताछायस्थेर्बृहस्पतिर्गुप्तःशायस्थिर्भवत्रातात्छायस्थेर्भवत्रातःशायस्थिःकुस्तुकाच्छार्कराक्षात्कुस्तुकशार्कराक्षःश्रवणदत्तात्कौहलाछ्रवणदत्तःकौहलःसुशारदाछालंकायनात्सुशारदःशालंकायनऊर्जयतऔपमन्यवादूर्जयन्नौपमन्यवोभानमतऔपमन्यवाद्भानुमानौपमन्यवआनंदजाञ्चांधनायनादानंदजश्चांधनायनःशांबाच्छार्कराक्षात्कांबोजाश्चौपमन्यवाच्छांबःशार्कराक्षःकां

॥ ६४१ ॥ नित्यतर्पणमां. ऋषितर्पणमां. ब्रह्मयज्ञमां.

* " नमोब्रह्मणे थी=पजायच= ' सुधी नित्यतर्पणमां अने " शर्वदत्ता " थी ब्रह्मयज्ञमां भणवा लक्षमां राखवुं.

अग्निभुवःकाश्यपादग्निभूःकाश्यपइंद्रभुवःकाश्यपादिंद्रभूःकाश्यपोमित्रभुवःकाश्यपान्मित्रभूःकाश्यपोविभंडकात्काश्यपात्पितुर्विभंडकःकाश्यपऋष्यशृंगात्काश्यपात्पितुऋष्यशृंगःकाश्यपःकश्यपात्पितुरेवकश्यपोग्नेरग्निरिंद्रादिंद्रोवायोर्वायुर्मृत्योर्मृत्युःप्रजापतेःप्रजापतिर्ब्रह्मणोब्रह्मास्वयंभूस्तस्मैनमस्तेभ्योनमः ॥ २ ॥ ॥ ६८३ ॥ आचार्येभ्योनमस्कृत्वायवद्‌ शास्यकीर्त्तयेत् ॥ स्वधापूर्वेपांभवति नेतायुर्दीर्घमश्नुतइत्युक्त्वानुकामेद्द्‌ शमाब्रह्मणोनयन्नर्यमभूतेःकालववादर्यमभूतिःकालववोभद्रशर्मणःकौशिकाद्भद्रशर्माकौशिकःपुष्पयशसऔदव्रजेःपुष्पयशाऔदव्रजिःसंकराद्गौतमात्संकरोगौतमोर्यमराधाद्गोभिलात्पूषमित्राद्गोभिलात्पूषमित्रोगोभिलोश्वमित्राद्गोभिलादश्वमित्रोगोभिलोवरुणमित्राद्गोभिलाद्वरुणमित्रोगोभिलोमूलमित्राद्गोभिलान्मूलमित्रोगोभिलोवत्समित्राद्गोभिलाद्वत्समित्रोगोभिलोगौल्गुलवीपुत्राद्गोभिलाद्गौल्गुलवीपुत्रोगोभिलोबृहद्वसोःपितुर्बृहद्वसुर्गोभिलोगोभिलाद्वेवगोभिलोराधाद्गोतमात्समानपरद्‌ समानंपरं ॥ ३ ॥ इतिश्री मंत्रसंहितायां वंशब्राह्मणं समाप्तम् ॥

॥ ६८३ ॥ प्रश्नयज्ञमा.

॥ सामवेदस्य मंत्रसंहितायामष्टब्राह्मणे वंशब्राह्मणं समाप्तम् ॥ संवत १९५६ श्रावण ॥

## ॥ अथ मंत्रब्राह्मणस्य प्रथमः प्रपाठकः तत्र प्रथमः खंडः प्रारंभः ॥

॥ ६४४ ॥ ॐ देवसवितःप्रसुवयज्ञंप्रसुवयज्ञपतिंभगाय ॥ दिव्योगंधर्वःकेतपूःकेतन्नःपुनातुवाचस्पतिर्वाचन्नःस्वदतु ॥ १ ॥ ॥ ६४५ ॥ कामवेदतेनाममदोनामासिसमानयामुꣳसुरातेअभवत् ॥ परमत्रजन्माग्नेतपसोनिर्मितोसिस्वाहा ॥ २ ॥ ॥ ६४६ ॥ इमंतउपस्थंमधुनासꣳसृजामिप्रजापतेर्मुखमेतद्द्वितीयं ॥ तेनपुꣳसोभिभवासिसर्वानवशान्वशिन्यसिराज्ञीस्वाहा ॥ ३ ॥ ॥ ६४७ ॥ अग्निंक्रव्यादमकृण्वनगुहानास्त्रीणामुपस्थमृषयःपुराणाः ॥ तेनाज्यमकृण्वꣳस्त्रैशृङ्गंत्वाष्ट्रंत्वयितद्दधातुस्वाहा ॥ ४ ॥ ॥ ६४८ ॥ याअकृन्तन्नवयन्याअतन्वतयाश्चदेव्योअन्तानभितोततंथ ॥ तास्त्वादेव्योजरसासंव्ययंत्वायुष्मतीदंपरिधत्स्ववासः ॥ ५ ॥ ॥ ६४९ ॥ परिधत्तधत्तवाससैनाꣳशतायु-

॥ ६४४ ॥ परमेष्ठीप्रजापतिर्यजुःसविता.
॥ ६४५ ॥ प्रस्तारपंक्ति काम.
॥ ६४६ ॥ मध्ये ज्योतिर्जगतीउपस्थरूपःकामः
॥ ६४७ ॥ उपरिष्टाज्ज्योतिरियमुपस्थरूप कामः
॥ ६४८ ॥ जगतीछंद वस्त्रकारादेवता. वस्त्रपरिधापनेविनि०
॥ ६४९ ॥ त्रिष्टुप्छंद. परिधापयितारोदेवता. उत्तरियपरि०

॥ ६४४ ॥ वैश्वदेवमां. कुशाडिमां.
॥ ६४५ ॥ ॥ ६४६ ॥ ॥ ६४७ ॥ ॥ ६४८ ॥ ॥ ६४९ ॥ } विवाहप्रयादीमां.

पीद्द कृणुतदीर्घमायुः ॥ शतंचजीवशरदःसुवर्चावसूनिचार्येविभजासिजीवन् ॥ ६ ॥ ॥ ६५० ॥ सो
मोददद्गंधर्वायगंधर्वोददद्ग्नये ॥ रयिंचपुत्रांद्द्श्चादादग्निर्मह्यमथोइमां ॥ ७ ॥ ॥ ६५१ ॥ प्रमेपति
यानःपंथाःकल्पताद्द्शिवाअरिष्टापतिलोकंगमेयं ॥ प्रास्याःपतियानःपंथाःकल्पताद्द्शिवाअरिष्टा
पतिलोकंगम्याः ॥ ८ ॥ ॥ ६५२ ॥ अग्निरेतुप्रथमोदेवताभ्यःसोस्यैप्रजांमुंचतुमृत्युपाशात् ॥ तद
यद्द्राजावारुणोनुमन्यतांयथेयद्द्स्त्रीपौत्रमघन्नरोदात्स्वाहा ॥ ९ ॥ ॥ ६५३ ॥ इमामग्निस्त्रायतां
गार्हपत्यःप्रजामस्यैजरदष्टिंकृणोतु ॥ अशून्योपस्याजीवतामस्तुमातापौत्रमानंदमभिविबुद्ध्यतामि
यद्द्स्वाहा ॥ १० ॥ ॥ ६५४ ॥ द्यौस्तेपृष्ठद्द्रक्षतुवायुरूरूअश्विनौच ॥ स्तनंधयस्तेपुत्रांत्सविताभि
रक्षत्वावाससःपरिधानाद्बृहस्पतिर्विश्वेदेवाअभिरक्षंतुपश्चात्स्वाहा ॥ ११ ॥ ॥ ६५५ ॥ मातेगृहेपुनिशि
घोषउत्थादन्यतत्वद्रुदत्यःसंविशन्तु ॥ मात्वद्द्रुदत्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यंतिप्र

॥ ६५० ॥ अनुष्टुप्छंदः सोमोदेवता. [ धापनोविनियोगः
॥ ६५१ ॥ द्विपाद्जगतीछंदः पतिर्देवता. पदप्रवर्तनेविनि०
॥ ६५२ ॥ अतिजगतीछंदः अग्निर्देवता. आज्यहोमेविनियोगः
॥ ६५३ ॥ अतिजगतीछंदः अग्निर्देवता. आज्यहोमेविनियोगः
॥ ६५४ ॥ शक्वरीछंदः विश्वेदेवादेवता. आज्यहोमेविनि०
॥ ६५५ ॥ अतिजगतीछंदः अग्न्यादयोदेवता. आज्यहोमेवि०

॥ ६५० ॥
॥ ६५१ ॥
॥ ६५२ ॥
॥ ६५३ ॥
॥ ६५४ ॥
॥ ६५५ ॥ } विवाहआदांमां.

जाद्द सुमनस्यमानाद्द स्वाहा ॥ १२ ॥ ॥ ६५६ ॥ अप्रजस्यंपौत्रमर्त्त्यंपाप्मानमुतवाअघं ॥ शीर्ष्णः स्रजामिवोन्मुच्याद्विषभ्यःप्रतिमुंचामिपाशद्द स्वाहा ॥ १३ ॥ ॥ ६५७ ॥ परैतुमृत्युरमृतंमआगाद्वैवस्वतोनोअभयंकृणोतु ॥ परंमृत्योअनुपरेहिपंथांयत्रनोअन्यइतरोदेवयानात् ॥ १४ ॥ ॥ ६५८ ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाद्द रीरिषोमोतवीरांस्वाहा ॥ १५ ॥ ॥ इति सामवेदीये मंत्रब्राह्मणस्य प्रथमः खंडः ॥ १ ॥ ॥ अथ द्वितीयः खंडः प्रारंभः ॥ ॥ ६५९ ॥ इममश्मानमारोहाश्मेवत्वद्द स्थिराभव ॥ द्विषंतमपबाधस्वमाचत्वंद्विषतामधः ॥ १ ॥ ॥ ६६० ॥ इयन्नार्युपब्रूतेग्नौलाजानावपंती ॥ दीर्घायुरस्तुमेपतिःशतंवर्षाणिजीवत्वेधंतांज्ञातयोममस्वाहा ॥ २ ॥ ॥ ६६१ ॥ अर्यमणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवोअर्य्यमाप्रेतोमुंचातुमामुतस्वाहा ॥ ३ ॥ ॥ ६६२ ॥ पूष

| | | |
|---|---|---|
| ॥ ६५६ ॥ उपरिष्टाद्बृहतीछंदः अन्यादयोदेवता. आज्य० | ॥ ६५६ ॥ | विवाहआदौमो. |
| ॥ ६५७ ॥ आर्चुष्णिक्छंदः वैवस्वतोदेवता. आज्यहोमेविनि० | ॥ ६५७ ॥ | |
| ॥ ६५८ ॥ ” ” ” | ॥ ६५८ ॥ | |
| ॥ ६५९ ॥ अनुष्टुपछंदः अश्मादेवता अश्माक्रमणेविनियोगः | ॥ ६५९ ॥ | |
| ॥ ६६० ॥ उपरिष्टाज्जगतीछंदः अग्निर्देवता लाजाहोमेवि० | ॥ ६६० ॥ | |
| ॥ ६६१ ॥ उपरिष्टाद्बृहतीछंदः अर्यमादेवता. लाजाहोमेवि० | ॥ ६६१ ॥ | |
| ॥ ६६२ ॥ ” पूषादेवता. लाजाहोमेविनियो० | ॥ ६६२ ॥ | |

णंतुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवःपूषाप्रेतोमुंचातमामुतस्वाहा ॥ ४ ॥ ॥ ६६३ ॥ कन्य
लापितृभ्यःपतिलोकंयतीयमपदीक्षामयष्ट ॥ कन्याउतत्वयावयंधाराउदन्याइवातिगाहेमहिद्विषः ॥
॥ ५ ॥ ॥ ६६४ ॥ एकमिषेविष्णुस्त्वानयतु ॥ ६ ॥ ॥ ६६५ ॥ द्वेऊर्जेविष्णुस्त्वानयतु ॥ ७ ॥
॥ ६६६ ॥ त्रीणिव्रतायविष्णुस्त्वानयतु ॥ ८ ॥ ॥ ६६७ ॥ चत्वारिमायोभवायविष्णुस्त्वानयतु
॥ ९ ॥ ॥ ६६८ ॥ पंचपशुभ्योविष्णुस्त्वानयतु ॥ १० ॥ ॥ ६६९ ॥ षड्रायस्पोषायविष्णुस्त्वा-
नयतु ॥ ११ ॥ ॥ ६७० ॥ सप्तसप्तभ्योहोत्राभ्योविष्णुस्त्वानयतु ॥ १२ ॥ ॥ ६७१ ॥ सखास
प्तपदीभवसख्यंतेगमेयङ् सख्यंतेमायोषाःसख्यंतेमायोष्ठ्याः ॥ १३ ॥ ॥ ६७२ ॥ सुमंगलीरियंव

| | |
|---|---|
| ॥ ६६३ ॥ त्रिष्टुप्छंदः कन्यादेवता. लाजाहोमेविनियोगः | ॥ ६६३ ॥ |
| ॥ ६६४ ॥ | ॥ ६६४ ॥ |
| ॥ ६६५ ॥ | ॥ ६६५ ॥ |
| ॥ ६६६ ॥ | ॥ ६६६ ॥ |
| ॥ ६६७ ॥ निपाद्छंदः विष्णुर्देवता पदाक्रमणे विनियोगः | ॥ ६६७ ॥ विवाहआदीमां. |
| ॥ ६६८ ॥ | ॥ ६६८ ॥ |
| ॥ ६६९ ॥ | ॥ ६६९ ॥ |
| ॥ ६७० ॥ | ॥ ६७० ॥ |
| ॥ ६७१ ॥ यामकीपंक्तिछंदः आशास्यमानादेवता. आशास० | ॥ ६७१ ॥ |
| ॥ ६७२ ॥ अनुष्टुप्छंदः ,, दर्शाकप्राप्तिमंत्रणेवि० | ॥ ६७२ ॥ |

धूरिमाद्ध समेतपश्यत ॥ सौभाग्यमस्यैदत्वायाथास्त्वंविपरेतन ॥ १४ ॥ ॥ ६७३ ॥ समंजंतुविश्वे
देवाःसमापोहृदयानिनौ ॥ संमातरिश्वासंधातासमुदेष्ट्रिदधातुनौ ॥ १५ ॥ ॥ ६७४ ॥ गृभ्णामि
तेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः
॥ १६ ॥ ॥ ६७५ ॥ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ॥ वीरसूर्जीवसूर्देवका
मास्योनाशन्नोभवद्विपदेशंचतुष्पदे ॥ १७ ॥ ॥ ६७६ ॥ आनःप्रजांजनयतुप्रजापतिराजरसायस
मनक्त्वर्यमा ॥ अदुर्मंगलीःपतिलोकमाविशशन्नोभवद्विपदेशंचतुष्पदे ॥ १८ ॥ ॥ ६७७ ॥ इमां
त्वमिंद्रमिढ्वःसुपुत्रांसुभगांकृधि ॥ दशास्यांपुत्रानाधेहिपतिमेकादशंकुरु ॥ १९ ॥ ॥ ६७८ ॥ सं
म्राज्ञीश्वशुरेभवसंम्राज्ञीश्वश्र्वांभव ॥ ननांदरिसंम्राज्ञीभवसंम्राज्ञीअधिदेवृषु ॥ २० ॥ ॥ ६७९ ॥ म

॥ ६७३ ॥ „ विश्वेदेवाअद्देवता. मूर्द्धाभिषेचनेवि०
॥ ६७४ ॥ त्रिष्टुप्छंदः भगादयोदेवता. पाणिग्रहणेविनियोगः
॥ ६७५ ॥ „ कन्यादेवता आशासनेविनियोगः
॥ ६७६ ॥ जगतीछंदः प्रजापतिर्देवता. „
॥ ६७७ ॥ अनुष्टुप्छंदः इंद्रोदेवता. आशीःप्रार्थनेविनियोगः
॥ ६७८ ॥ „ कन्यादेवता. सम्राज्ञीकरणेविनियोगः
॥ ६७९ ॥ त्रिष्टुप्छंदः प्रार्थ्यमानदेवता. पक्षोभःपप्रार्थनेवि०

॥ ६७३ ॥
॥ ६७४ ॥
॥ ६७५ ॥
॥ ६७६ ॥ } विवाहआदीमां.
॥ ६७७ ॥
॥ ६७८ ॥
॥ ६७९ ॥

मम्व्रतेतेहृदयंदधातुममचित्तमनुचित्तंतेअस्तु ॥ ममवाचमेकमनाजुषस्वबृहस्पतिस्त्वानियुनक्तुमह्यं
॥ २१ ॥ ॥ इति सामवेदीये मंत्रब्राह्मणस्य द्वितीयः खंडः ॥ २ ॥ अथ तृतीयः खंडः प्रारंभः ॥ ॥ ६८० ॥ लेखा
संधिषुपक्ष्मस्वावर्तेषुचयानिते ॥ तानितेपूर्णाहुत्यासर्वाणिशमयाम्यहं ॥ १ ॥ ॥ ६८१ ॥ केशे
षुयच्चपापकंमीक्षितेह्यदितेचयत् ॥ तानितेपूर्णाहुत्यासर्वाणिशमयाम्यहं ॥ २ ॥ ॥ ६८२ ॥ शी-
लेयच्चपापकंभाषितेहसितेचयत् ॥ तानितेपूर्णाहुत्यासर्वाणिशमयाम्यहं ॥ ३ ॥ ॥ ६८३ ॥ आ
रोकेषुचदंतेषुहस्तयोःपादयोश्चयत् ॥ तानितेपूर्णाहुत्यासर्वाणिशमयाम्यहं ॥ ४ ॥ ॥ ६८४ ॥ ऊ-
र्वोरुपस्थेजंघयोःसंधानेषुचयानिते ॥ तानितेपूर्णाहुत्यासर्वाणिशमयाम्यहं ॥ ५ ॥ ॥ ६८५ ॥ या
निकानिचघोराणिसर्वांगेषुतवाभवन् ॥ पूर्णाहुतिभिराज्यस्यसर्वाणितान्यशीशमम् ॥ ६ ॥ ॥
॥ ६८६ ॥ ध्रुवाद्यौर्ध्रुवापृथिवीध्रुवंविश्वमिदंजगत् ॥ ध्रुवासःपर्वताइमेध्रुवास्त्रीपतिकुलेइयं ॥ ७ ॥

॥ ६८० ॥
॥ ६८१ ॥
॥ ६८२ ॥
॥ ६८३ ॥
॥ ६८४ ॥
॥ ६८५ ॥
लेखेत्यादीनां षण्णां अनुष्टुप्छंदः अभिधीयमानादेवता. पाणिग्रहस्याज्याहुतिहोमे विनियोगः

॥ ६८६ ॥ अनुष्टुप्छंदः अभिधीयमानादेवता. अनुमंत्रणोवि०

॥ ६८० ॥
॥ ६८१ ॥
॥ ६८२ ॥
॥ ६८३ ॥
॥ ६८४ ॥
॥ ६८५ ॥
॥ ६८६ ॥
विवाहआदीमां.

मंत्रब्राह्मणस्य तृतीय खंड. ॥ ३ ॥ अथ चतुर्थ. खंड प्रारंभः ॥ ॥ ६९४ ॥ अग्नेप्रायश्चित्तेत्वंदेवाना-
प्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामीयास्याः पापीलक्ष्मीस्तामस्याअपजहि ॥ १ ॥
॥ ६९५ ॥ वायोप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामियास्याः पतिघ्नी
तनूस्तामस्याअपजहि ॥ २ ॥ ॥ ६९६ ॥ चंद्रप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथ
कामउपधावामियास्याअपुत्र्यातनूस्तामस्याअपजहि ॥ ३ ॥ ॥ ६९७ ॥ सूर्यप्रायश्चित्तेत्वंदेवानां-
प्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामियास्याअपशव्यातनूस्तामस्याअपजहि ॥ ४ ॥
॥ ६९८ ॥ अग्निवायुचंद्रसूर्याः प्रायश्चित्तयोयूयंदेवानांप्रायश्चित्तयस्थब्राह्मणोवोनाथकामउपधावा
मियास्याः पापीलक्ष्मीर्यापतिघ्नीयापुत्र्यायाऽपशव्यातामस्याअपहत ॥ ५ ॥ ॥ ६९९ ॥ विष्णुर्यो
निंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ ६ ॥ ॥ ७०० ॥ गर्भं

| | |
|---|---|
| ॥ ६९४ ॥ ॥ ६९५ ॥ ॥ ६९६ ॥ ॥ ६९७ ॥ ॥ ६९८ ॥ अग्न्यादयइमेपंचमंत्रानिगदाः । यजुश्छंदः अग्न्यादिदेवता. चतुर्थीतिप्रसिद्धहोमकर्मणिवि नियोगः | ॥ ६९४ ॥ ॥ ६९५ ॥ ॥ ६९६ ॥ ॥ ६९७ ॥ ॥ ६९८ ॥ विवाहव्यादी चतुर्थी कर्ममां. |
| ॥ ६९९ ॥ विष्णुर्योनिरनुष्टुप्त्रिष्ट्वादयः [ नौ- ॥ ७०० ॥ गर्भंधेहीतिप्रजापतिरनुष्टुप्सिनीवालीसरस्वत्यश्वि- | ॥ ६९९ ॥ ॥ ७०० ॥ सीमंतमां. |

धेहिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजौ ॥ ७ ॥ ॥ ७०१ ॥ पु-
माꣳ सौमित्रावरुणौपुमाꣳ सावश्विनावुभौ ॥ पुमानग्निश्चवायुश्चपुमान्गर्भस्तवोदरे ॥ ८ ॥ ॥
॥ ७०२ ॥ पुमानग्नि·पुमानिंद्र·पुमांदेवोबृहस्पतिः ॥ पुमाꣳ संपुत्रंविंदस्वतंपुमाननुजायतां ॥ ९ ॥
॥ इति सामवेदीये मंत्रब्राह्मणस्य चतुर्थं खंड ॥ ४ ॥ अथ पंचम· खंड प्रारंभ ॥ ॥ ७०३ ॥ अयमूर्जावतोवृक्ष
ऊर्जीवफलिनीभव ॥ पर्णंवनस्पतेनुत्वानुत्वासुयतांरयिः ॥ १ ॥ ॥ ७०४ ॥ येनादितेःसीमान-
न्नयतिप्रजापतिर्महतेसौभगाय ॥ तेनाहमस्यैसीमानन्नयामिप्रजामस्यैजरदष्टिंकृणोमि ॥ २ ॥ ॥
॥ ७०५ ॥ राकामहꣳ सुहवाꣳ सुष्टुतीहुवेश्रृणोतुनःसुभगाबोधतुत्मना ॥ सीव्यत्वपःसूच्याछिद्यमान
याददातुवीरꣳ शतदायमुक्थ्यं ॥ ३ ॥ ॥ ७०६ ॥ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेव
सूनि ॥ ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषꣳ सुभगेरराणा ॥ ४ ॥ ॥ ७०७ ॥ किंपश्यसिप्रजां

| | | |
|---|---|---|
| ॥ ७०१ ॥ पुमासावित्यस्यप्रजापतिरनुष्टुप्मित्रावरुणादय: | ॥ ७०१ ॥ | सीमंतमा. |
| ॥ ७०२ ॥ पुमानग्निरितिप्रजापतिरनुष्टुबग्न्यादय· | ॥ ७०२ ॥ | |
| ॥ ७०३ ॥ अयमूर्जेतिप्रजापतिरनुष्टुबुदुंबर. | ॥ ७०३ ॥ | फलस्नानमा. कलशस्थापनमां सीमंतमा. |
| ॥ ७०४ ॥ येनादितिं प्रजापतिस्त्रिष्टुप्प्रजापति | ॥ ७०४ ॥ | सीमंतमा |
| ॥ ७०५ ॥ राकामहमितिप्रजापतिर्जगतीराका | ॥ ७०५ ॥ | |
| ॥ ७०६ ॥ यास्तेराकइतिप्रजापतिर्जगतीराका | ॥ ७०६ ॥ | |
| ॥ ७०७ ॥ किंपश्यसीतिप्रजापतिर्यजु कसर: | ॥ ७०७ ॥ | |

पशून्मेभागपंमह्यंदीर्घायुत्वंपत्युः ॥ ५ ॥ ॥ ७०८ ॥ यातिरश्चीनिपद्यतेअहंविधरणीइति ॥ तांत्वा
घृतस्यधारयायजेसंराधनीमहं ॥ संराधन्यैदेव्यैदेष्ट्र्यै ॥ ६ ॥ ॥ ७०९ ॥ विपश्चित्पुछमभरत्तद्धा
तापुनराहरत् ॥ परेहित्वंविपश्चित्पुमानयंजनिष्यतेसौनाम ॥ ७ ॥ ॥ ७१० ॥ इयमाग्नेदमन्नामि
दमायुरिदममृतं ॥ ८ ॥ ॥ ७११ ॥ मेधांतेमित्रावरुणौमेधामग्निर्दधातु ॥ मेधांतेअश्विनौदेवावा-
धत्तांपुष्करस्रजौ ॥ ९ ॥ ॥ ७१२ ॥ यत्तेसुशीमेहृदयंहितमंतःप्रजापतौ ॥ वेदाहंमन्येतद्ब्रह्ममा
हंपौत्रमघन्नियां ॥ १० ॥ ॥ ७१३ ॥ यत्पृथिव्याअनामृतंदिविचंद्रमसिश्रितं ॥ वेदामृतस्याहंनाम
माहंपौत्रमघंरिषं ॥ ११ ॥ ॥ ७१४ ॥ इंद्राग्नीशर्मयछतप्रजायैमेप्रजापती ॥ यथायन्नप्रमीयेत
पुत्रोजनित्र्याअधि ॥ १२ ॥ ॥ ७१५ ॥ यददश्चंद्रमासिकृष्णंपृथिव्याहृदयंश्रितं ॥ तदहंविद्वांस्त

॥ ७०८ ॥ विष्णुर्योनिरितिप्रजापतिरनुष्टुप्‌पाद्याबृहस्पत्यग्निसयोर्थ-
होमेविनियोगः
॥ ७०९ ॥ अनुष्टुप्‌ विपश्चिद्देवता. गर्भाधानांगकर्मणिवि०
॥ ७१० ॥ " धातृदेवता. बालस्यजीह्वायंचूर्ण-
प्राशनेविनियोगः
॥ ७११ ॥ अनुष्टुप्‌छंदः मित्रावरुणादयोदेवता. सर्पिःप्राशने०
॥ ७१२ ॥
॥ ७१३ ॥ पर्यायदर्शा. अनुष्टुप्छंदः चंद्रोदेवता. शिशोः
॥ ७१४ ॥ अमावास्यायांज्योत्स्नायांचंद्रदर्शनेविनि०
॥ ७१५ ॥

॥ ७०८ ॥ सोष्यंतीकर्ममंत्राः.
॥ ७०९ ॥ सोष्यंतीकर्ममंत्राः.
॥ ७१० ॥ जातकर्ममंत्राः.
॥ ७११ ॥
॥ ७१२ ॥
॥ ७१३ ॥ चंद्रदर्शनमंत्राः.
॥ ७१४ ॥
॥ ७१५ ॥

त्पश्यन्माहंपौत्रमघंन्न्यगां ॥ १३ ॥ ॥ ७१६ ॥ कोसिकतमोस्येषोस्यमृतोसि ॥ आहस्पत्यंमासंप्र
विशासौ ॥ १४ ॥ ॥ ७१७ ॥ सत्वाह्नेपरिददात्वहस्त्वारात्र्यैपरिददातुरात्रिस्त्वाहोरात्राभ्यांपरिददा
त्वहोरात्रौत्वार्द्धमासेभ्यःपरिदत्तामर्द्धमासास्त्वामासेभ्यःपरिददतुमासास्त्वर्तुभ्यःपरिददत्वृतवस्त्वा
संवत्सरायपरिददतुसंवत्सरस्त्वायुषेजरायैपरिददात्वसौ ॥ १५ ॥ ॥ ७१८ ॥ अंगादंगात्संभ्रव
सिहृदयादधिजायसे ॥ प्राणंतेप्राणेनसंदधामिजीवमेयावदायुषं ॥ १६ ॥ ॥ ७१९ ॥ अंगादंगात्सं
भवसिहृदयादधिजायसे ॥ वेदोवैपुत्रनामासिसजीवशरदःशतं ॥ १७ ॥ ॥ ७२० ॥ अश्माभव
परशुर्भवहिरण्यमस्तृतंभव ॥ आत्मासिपुत्रमामृथाःसजीवशरदःशतं ॥ पशूनांत्वाहिंकारेणाभिजि
घ्राम्यसौ ॥ १८ ॥ इति सामवेदीये मन्त्रब्राह्मणस्य पंचमः खंडः ॥ ५ ॥ ॥ अथ षष्ठः खंड. प्रारंभः ॥ ॥ ७२१ ॥ आ
यमगात्सविताक्षुरेणं ॥ १ ॥ ॥ ७२२ ॥ उष्णेनवायउदकेनैधि ॥ २ ॥ ॥ ७२३ ॥ आपउंदंतुजीव

॥ ७१६ ॥ यजुश्छंद आदित्यदेवता नामकरणेविनियोग
॥ ७१७ ॥ निगदश्छंद आदित्यदेवता. नामकरणेविनियोग
॥ ७१८ ॥ अनुष्टुप्छंदः प्रजापतिर्देवता मूर्द्धाघ्राणेविनि०
॥ ७१९ ॥ यजुश्छंद „ शिरआघ्राणेविनियोग
॥ ७२० ॥ „ „ „
॥ ७२१ ॥ ॥ ७२२ ॥ ॥ ७२३ ॥ } निगदश्छंदः प्रजापतिर्देवता चूडाकरणे वि०

॥ ७१६ ॥ नामकर्ममंत्रो.
॥ ७१७ ॥ „
॥ ७१८ ॥ ॥ ७१९ ॥ ॥ ७२० ॥ } प्रवासागतमंत्रो.
॥ ७२१ ॥ ॥ ७२२ ॥ ॥ ७२३ ॥ } चौलकर्ममंत्रो.

